८।

ॐ





पौराणिक तथा वैदिक अध्ययन एवं अनुसन्धान संस्थान

विज्ञानं ब्रह्म



नैमिषारण्य - सीतापुर

# नैमिषीयम्

सप्तमो वर्षः द्वितीया संख्या वसन्तपञ्चमी संवत् २०४२

# नैमिषीयम्

पौराणिक-वैदिकाध्ययनानुसन्धानसंस्थानस्यार्द्धवार्षिकी पत्रिका

●

सम्पादकः

श्रीगौरीनाथशास्त्री

●

सप्तमो वर्षः द्वितीया संख्या वसन्तपञ्चमी, संवत् २०४३

फरवरी, १९८७

# विषयानुक्रमणी





# मत्स्य-कूर्मपुराणयोः काश्याः स्वरूपम्

आचार्यप्रवरश्रीकरुणापतित्रिपाठी
कुलपतिचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
अध्यक्षश्च,
उत्तर-प्रदेश-संस्कृत-अकादम्याः

❀❀❀

( पूर्वाङ्कात्—व० ६, सं० २—अनुवृत्तम् )

'मत्स्य-कूर्मपुराणयोः काश्याः स्वरूपम्' इति विषयमादाय नैमिषीयाख्य-पत्रिकाया द्वयोरङ्कयोः काश्या लोकोत्तरं माहात्म्यं मया प्रतिपादितम् । तत्र काश्या अविमुक्ततत्त्वं किंरूपम् ? कथञ्च मानवैस्तदात्मसात्कर्तुं शक्यते ? अविमुक्तक्षेत्रस्य सान्निध्यात् कथं शिवसायुज्यमवाप्यते ? इत्येतत्सर्वं पूर्वाङ्कयोः प्राकाश्यं प्राप्त-योर्निबन्धयोर्विवृतम् ।

साम्प्रतं खलु तस्यैवाविमुक्तक्षेत्रस्य चर्चा सविशेषरूपेण प्रस्तूयतेऽधस्तात् । एकदा भगवत्या भगवान् शिवो जिज्ञासितो यदस्मिन्नविमुक्तक्षेत्रे निवासभूतः पक्षपातः केन कारणेन भवताऽङ्गीकृतः ? सन्ति हि भवतां निवासयोग्यानि कैलास-शिखरस्य गिरिकन्दराणि, रम्याणि च तत्र विविधानि देवोद्यानानि, चेतोहराणि किलान्यानि पापौघक्षयकराणि धामानि । तानि सकलानि भुक्ति-मुक्तिप्रदानि क्षेत्राणि त्यक्त्वाऽत्राविमुक्तक्षेत्रे शाश्वतिकस्य निवासस्य कानि कारणानि ? तत्सर्वं गुह्याद् गुह्यतरं भवता प्रकाशनीयम् । विभावनीया हि मत्स्यपौराणीयाः श्लोका विद्वद्भिः—

हिमवन्तं गिरिं त्यक्त्वा मन्दरं गन्धमादनम् ।
कैलासं निषधं चैव मेरुपृष्ठं महाद्युतिम् ॥

रम्यं गिरिशिखरञ्चैव मानसं सुमहागिरिम् ।
देवोद्यानानि रम्याणि नन्दनं वनमेव च ॥

सुरस्थानानि मुख्यानि तीर्थान्यायतनानि च ।
तानि सर्वाणि सन्त्यज्य ह्यविमुक्ते रतिः कथम् ॥

किमत्र सुमहत्पुण्यं परं गुह्यं वदस्व मे ।
येन त्वं रमसे नित्यं भूतसम्पद्गुणैर्युतः ॥

क्षेत्रस्य प्रवरत्वञ्च ये च यत्र निवासिनः।
तेषामनुग्रहः कश्चित् सर्वं ब्रूहि शङ्कर[१]॥

भवान्या एतान् प्रश्नान् समाकर्ण्य भवानीजानिः शङ्करः प्रोवाच यदन्यानि भुक्ति-मुक्तिप्रदानि चेतोहराणि क्षेत्राणि विहायाविमुक्तक्षेत्रस्याङ्गीकारे सन्ति बहूनि कारणानि। वाराणस्यां हि पुण्यतमा नदी गङ्गा सिद्धगन्धर्वसेविता सती प्रवहति। मां प्रति तस्याः सुरतटिन्या नैसर्गिकी प्रीतिरस्ति। तदुक्तं मात्स्ये—

वाराणस्यां नदी पुण्या सिद्धगन्धर्वसेविता।
प्रविष्टा त्रिपथगा गङ्गा तस्मिन् क्षेत्रे मम प्रिये॥
ममैव प्रीतिरतुला कृत्तिवासे च सुन्दरि।
सर्वेषां चैव स्थानानां स्थानं तत्तु यथाधिकम्॥
तेन कार्येण सुश्रोणि तस्मिन् स्थाने रतिर्मम[२]॥

अन्यान्यपि अविमुक्तक्षेत्रस्याङ्गीकारकारणानि प्रकटितानि सदाशिवेन। तेनोक्तं यदिदं क्षेत्रं परमं पवित्रम्। अत्र निमेषमात्रनिवासस्य फलं परमं तपः-साधकम्। यो भक्तो जितेन्द्रियः सन् मासमेकमत्र निवसति, स परमं दिव्यं पाशुपतं व्रतमवाप्नोति। तद्यथा—

निमेषमात्रमपि यो ह्यविमुक्ते तु भक्तिमान्।
ब्रह्मचर्यसमायुक्तः परमं प्राप्नुयात्तपः॥
योऽत्र मासं वसेद्धीरो लघ्वाहारो जितेन्द्रियः।
सम्यक्तेन व्रतं चीर्णं दिव्यं पाशुपतं महत्[३]॥

किं बहुना, अस्याविमुक्तक्षेत्रस्य निषेवणेन अशाश्वतं संसारभयं त्वपक्षीयत एव, योगक्षेमप्रदमपीदं क्षेत्रमाम्नातम्। 'अप्राप्तस्य प्राप्तिर्योगः, प्राप्तस्य रक्षणं क्षेमः' इत्युक्त्या जीवैर्यत्पुण्यमर्जितम्, तत्त्वत्र रक्षितो भवत्येव, अप्राप्तं यत् शिवसायुज्यरूपो योगः, तदप्यवाप्नोति मानवः। तथा च तत्रैव—

ईश्वरप्रेरितो याति दुष्प्रापामकृतात्मभिः।
अशाश्वतमिदं ज्ञात्वा मानुष्यं बहुकिल्बिषम्॥
अविमुक्तं निषेवेत संसारभयमोचनम्।
योगक्षेमप्रदं दिव्यं बहुविघ्नविनाशनम्॥
अविमुक्तप्रसादात्तु शिवसायुज्यमाप्नुयात्[४]।

अविमुक्तक्षेत्रस्य सर्वातिशायि माहात्म्यं विवृण्वता भवेन पुनरपि प्रत्यपादि यत् स्थावरजङ्गमात्मकं जगद्यदा प्रलयं याति, तदाऽपि महागणशतैर्वृतोऽहम-

१. मत्स्यपु०—८३।१-५; २. तत्रैव—८३।७-९; ३. तत्रैव—८२।११-१२।
४. तत्रैव—८२।२५-२७।

विमुक्ताख्यं स्थानं न त्यजामि। तस्मिन् हि प्रलयात्मके युगक्षये देव-गन्धर्व-यक्षोरग-राक्षसा मम वक्त्रे निवासार्थं प्रविशन्ति। तथा चोक्तं मात्स्ये पुराणे—

प्रलये सर्वभूतानां लोके स्थावरजङ्गमे।
न हि त्यजामि तत्स्थानं महागणशतैर्वृतः॥
यत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः।
वक्त्रं मम महाभागे प्रविशन्ति युगक्षये[1]॥

आशुतोषेण भगवता भूतभावनेन पौनःपुन्येन अस्याविमुक्तक्षेत्रस्य महनीयं महित्त्वमुपावर्णि। स कथयति यद् अयि देवि! जीवेन जन्मान्तरशतैः तपस्तप्त्वा यद् योगाख्यं तत्त्वमधिगन्तुं शक्यते, शतसहस्रेण वा जन्मना यन्मोक्षाख्यं तत्त्वमवाप्यते, तद् योगाख्यं मोक्षाख्यं च तत्त्वमविमुक्ते निवसता जीवेनैकेन जन्मनाऽधिकर्तुं शक्यते। तथा हि मात्स्यं पुराणम्—

जन्मान्तरशतैर्देवि योगोऽयं यदि लभ्यते।
मोक्षः शतसहस्रेण जन्मना लभ्यते न वा॥
अविमुक्ते न संदेहो मद्भक्तः कृतनिश्चयः।
एकेन जन्मना सोऽपि योगं मोक्षं च विन्दति[2]॥

एवमेवाविमुक्तक्षेत्रस्य प्रभावो वर्णयता महादेवेनोक्तं यद् अविमुक्तक्षेत्रे हि धर्मश्चतुष्पादरूपेण तिष्ठति[3]। पृथिव्यामीदृशं क्षेत्रं नास्ति, यस्मिन् धर्मः साक्षात् चतुर्मूर्तिर्भूत्वाऽवतिष्ठति। तथा ह्युक्तम्—

पृथिव्यामीदृशं क्षेत्रं न भूतं न भविष्यति।
चतुर्मूर्तिः सदा धर्मस्तस्मिन्संनिहितः प्रिये[4]॥

**क्षेत्र-क्षेत्रज्ञमीमांसा—**

अस्मिन् हि श्लोके **'पृथिव्यामीदृशं क्षेत्रं न'** इत्युक्तम्। प्रायेण हि मुक्तिदायिका नगर्यः क्षेत्रशब्देन समाम्नाताः पुराणादिषु। तदत्र विवेचनीयं प्रतिभाति यत् किं तत्क्षेत्रम्, को वा क्षेत्रीति? क्षेत्र-क्षेत्रज्ञयोः को वा सम्बन्धः? **'काशीक्षेत्रम्', 'वाराणसीक्षेत्रम्', 'अविमुक्तक्षेत्रम्'** प्रभृतिशब्देषु को वाऽन्योन्यं संवादः? अत्राधस्तात् क्षेत्रशब्दस्य स्वारस्यमूहनीयं जिज्ञासुभिः।

---

१. म० पु०—८३।१२-१३; २. मत्स्यपु० ८३।३८-३९।

३. धर्मस्य चत्वारः पादाः किलैवं समाम्नाताः श्रीमद्भागवते—

तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः।
अधर्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव॥
(श्रीमद्भा० १ १७।२४)

४. मत्स्यपु०—८३।४१।

श्रीमद्भगवद्गीतायाः प्रथमाध्यायस्य प्रथमे श्लोके 'धर्मक्षेत्रे', 'कुरुक्षेत्रे' इत्यत्र क्षेत्रद्वयं सङ्कीर्तितम्। अत्र क्षेत्रद्वयस्य व्याख्यानं कुर्वता नीलकण्ठेन स्वीये भारतभावदीपाख्ये व्याख्याने प्रोक्तं यद् अविमुक्ताख्यं ब्रह्मप्राप्तिस्थानभूतं कुरुक्षेत्रम्, तदेव धर्मक्षेत्रमपि। तथा हि नीलकण्ठाचार्यस्य व्याख्यानम्—"तत्र वेदे तेषां 'कुरुक्षेत्रं देवयजनमास' (जा० उ० १) इति कर्मकाण्डप्रसिद्धं कुरुक्षेत्रमन्यत्। 'अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्' (जा० उ० १) इत्यविमुक्ताख्यं ब्रह्मप्राप्तिस्थानभूतं कुरुक्षेत्रमन्यत्। ब्रह्मसदनत्वं चास्य अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे, येनासावमृतीभूत्वा मोक्षीभवतीति' (जा० उ० १) इति वाक्यशेषेण व्युत्पादितमेतद्व्यावृत्त्यर्थं 'धर्मक्षेत्रे' इति विशेषणम्"[१] इति।

अन्यत्रापि गीतायां क्षेत्र-क्षेत्रज्ञयोर्विवेचनं भृशमवलोक्यते। तथा हि नीलकण्ठाचार्यस्यैव व्याख्यानम्—"इदमनात्मत्वेन भास्यं घटाद्यहङ्कारान्तं शरीरं विशरणधर्मि हे कौन्तेय! क्षेत्रं क्षिणोत्यात्मानमविद्यया, त्रायते च विद्यया इति क्षेत्रं कर्मबीजप्ररोहस्थानं क्षेत्रशब्देनोच्यते, एतद्यो वेत्ति भासयति, तं चिदात्मानं क्षेत्रज्ञ इत्यन्वर्थसंज्ञं प्राहुः[२]" इति।

महाभारते चापि क्षेत्र-क्षेत्रज्ञशब्दयोः प्रयोगस्यान्वर्थता विभावनीया सूरभिः। तत्र हि—

> क्षेत्राणि हि शरीराणि बीजं चापि शुभाशुभम्।
> तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते[३]॥

एवमेव क्षेत्र-क्षेत्रज्ञशब्दयोरर्थौ व्यातन्वानैः श्रीमदभिनवगुप्तपादैरप्युक्तं यद् यस्येश्वरस्य प्रसादाद् अचेतमिदं जगत् चैतन्यं लभते, स एव क्षेत्रज्ञः। तथा हि अभिनवगुप्तपादानां व्याख्यानम्—"परमात्मा वासुदेवः क्षेत्रज्ञः। तेन यत्प्रसादादचेतनमिदं चेतनीभावमायाति, स एव क्षेत्रज्ञः। विशेषस्तु परिमितव्याप्तिकं रूपमालम्ब्य आत्मेति भण्यते, अपरिमितसर्वक्षेत्रव्याप्त्या परमात्मा भगवान् वासुदेव इति[४]"। इत्थं परिमितव्याप्तिकत्वम् आत्मत्वम् क्षेत्रत्वं वा, अपरिमितव्याप्तिकत्वञ्च परमात्मत्वं क्षेत्रज्ञत्वमायाति।

वामनाचार्यैरपि अविगीतायां क्षेत्र-क्षेत्रज्ञशब्दयोस्तात्त्विकं निरूपणं विहितम्, तद्यथा—

> क्षेत्रं शरीरं यो वेद मदीयमिति तं बुधाः।
> क्षेत्रज्ञमाहुर्जानन्तः सम्यक्तस्य चिदंशताम्॥

---

१. श्रीमद्भगवद्गीता—१।१; २. तत्रैव—१३।२; ३. म० भा० १२।३५१।६।
४. निर्णयसागरीयैकादशटीकोपेतायाः श्रीमद्भगवद्गीतायास्त्रयोदशाध्यायान्ते उद्धृतोऽयमंशः।

चैतन्यं सर्वगं बिम्बं जीवोपाधिस्तदंशकः ।
भोक्ता तत्प्रतिबिम्बोऽयं क्षेत्रज्ञ इति संज्ञितः ।।
विदन्ति बिम्बं ये सम्यक् प्रतिबिम्बं विदन्ति ते ।
जानन्ति हि ज्ञातजलाः कल्लोलानिह नेतरे ।।
यैर्न दृष्टोऽम्बरे भानुस्ते जले प्रतिबिम्बितम् ।
दृष्टवन्तोऽपि तं न स्युः प्रतिबिम्बविदः क्वचित् ।।
बिम्बस्य निजहस्तेन यावन्नासा न पीडिता ।
न तावत्प्रतिबिम्बस्य पीडयते सा कथञ्चन ।।
तथा व्यापकता यावच्चितो नैवावधारिता ।
तावत्तत्प्रतिबिम्बस्य तत्त्वं भोक्तुर्न लभ्यते ।।
तस्माद्ये सच्चिदानन्दं सम्यक् प्रत्यभिजानते ।
सर्वत्रगं बिम्बभूतं त एव खलु तद्विदः ।।
× × × ×
क्षेत्रं जडं तत्क्षेत्रज्ञयोगादेव सचेतनम् ।
क्षेत्रज्ञः प्रतिबिम्बोऽसौ परमात्मा स चिन्मयः ।।

**अत्रायमाशयः**—क्षेत्रं जडपरम्, क्षेत्रज्ञस्तु सचेतनम् । एवं चिन्मयः क्षेत्रज्ञः चिदंशभूते जीवे प्रतिबिम्बते । अयमेव चिद्घनस्य परमात्मनः प्रतिबिम्बे भास्य-भासकशब्देनाप्यभिधीयते । इत्थं य ईश्वरो जीवानां सर्वाणि क्षेत्राणि चिद्घनेन प्रतिबिम्बीकरोति, स एव तस्य क्षेत्रज्ञत्वम् । अत्रैवाविमुक्तक्षेत्रशब्दस्यापि स्वार-स्यम् । योगात्मा भूतभावनो भगवान् शिवः सर्वाणि क्षेत्राणि = शरीराणि अस्मिन् अविमुक्तक्षेत्रे साक्षितया वेत्ति, भासयति, प्रकाशयति वा, एतदेव तस्य क्षेत्रज्ञत्व-मायातम् । यतो हि भगवान् कदाप्येतत् क्षेत्रं न विमुञ्चति, अतोऽविमुक्तक्षेत्रत्वेनेदं काशीक्षेत्रं समाख्यातम् । अन्यक्षेत्रेभ्य एतदेव वैशिष्ट्यमस्याविमुक्तक्षेत्रस्य यद् योगात्मना भगवता शिवेन सदेयं पुण्यनगरी निवासतया वृतेति ।

**अविमुक्ताख्याविषये विविधाः पौराणीया गाथाः**—

एवं रीत्या त्रिपुरारिराजनगरीयं केन प्रकारेण अविमुक्ताख्यामापेति सन्ति बह्वचः पौराणीया गाथाः । नारदमहापुराणे कथेयं लभ्यते यत् सर्वप्रथममिदं क्षेत्रं वैष्णवक्षेत्रमासीत् । भगवता पशुपतिना स्वनिवासार्थं किलेदं वैष्णवक्षेत्रं भगवतो विष्णोः सकाशात् प्राप्तम् । एवं भगवान् शिवो विष्णुक्षेत्रे निवसति । इदं हि महाक्षेत्रं भगवता विष्णुना, शिवेन च कदापि न त्यक्तम्, अत एवेदं क्षेत्रम् अविमुक्ताख्यामवाप, इत्येका गाथा[1] ।

अविमुक्तक्षेत्रविषयेऽपराऽपि गाथा तत्रैव दृग्गोचरीभवति । पुरा केचन राक्षसा अन्तरिक्षमार्गेणैकं शिवलिङ्गं नीत्वा गम्यमाना आसन् । यदा तच्छिव-

१. नारदमहापुराणम, उत्तरभागः—२२ ।

लिङ्गं काश्या उपरि आजगाम, तदा भगवता शिवेन विचारितं यत् केनोपायेन ममाविमुक्तक्षेत्राद् वियोगो मा भूत्। एवं चिन्त्यमाने तस्मिन् तत्र कुक्कुटस्य ध्वनिः सञ्जातः। तं ध्वनिं श्रुत्वा राक्षसाः शिवलिङ्गं तत्रैव त्यक्त्वा पलायिताः। तदनु तत्रैव रमणीये स्थाने तल्लिङ्गं स्थितमभूत्। एवं साक्षाद्देवाधिदेवो महादेवस्तत्र लिङ्गरूपेण विरराज। तदैव देवैर्महादेवस्यापरं नाम **'अविमुक्तम्'** इति चकार[1]। **'अविमुक्तेश्वरः'** इति तस्य संज्ञाया एतदेव रहस्यम्।

ब्रह्माण्डपुराणेऽविमुक्तक्षेत्रविषयिणी अपरैका गाथा दृश्यते। तत्रोक्तं यत् निकुम्भेन महात्मना वाराणसी पुरी शप्ता। तदानीं दिवोदासाख्यः प्रसिद्धः प्रजेश्वरोऽत्र राजाऽऽसीत्। निकुम्भाख्येन महात्मना शप्तं यद् वर्षसहस्रपर्यन्तमियं वाराणसी शून्या भवित्रीति। निकुम्भेन वाराणस्यां शप्तायामत्रत्यः प्रजेश्वरो दिवोदासो गोमत्यास्तटे रम्यां पुरीं निर्मापयामास।

ऋषिभिर्जिज्ञासितं यत् किमर्थं निकुम्भाख्यो धर्मात्मा वाराणसीं पुरीं शशाप। तदनु वैशम्पायनेन सविस्तरं शापकारणं प्रोक्तम्। तत्रत्या कथा किल परस्तादवलोकनीया—

दिवोदासस्तु राजर्षिर्नगरीं प्राप्य पार्थिवः।
वसति स्म महातेजाः स्फीतायां वै नराधिपः॥
एतस्मिन्नेव काले तु कृतदारो महेश्वरः।
देव्याः स प्रियकामस्तु न्यवसच्छ्वशुरान्तिके॥
देवाज्ञया पार्षदा ये विश्वरूपास्तपोधनाः।
पूर्वोक्तैः रूपविशेषैस्तोषयन्ति स्म पार्वतीम्॥
हृष्यते तैर्महादेवी मेना नैव तु हृष्यति।
जुगुप्सते सा नित्यं वै देवं देवीं तथैव च॥
सपार्षदस्त्वनाचारस्तव भर्ता महेश्वरः।
दरिद्रः सर्वदेवासौ शीलं तस्य न वर्तते॥
मात्रा तथोक्ता वचसा स्त्रीस्वभावान्न चक्षमे।
स्मितं कृत्वा तु वरदा भवपार्श्वमथागमत्॥
विवर्णवदना देवी महादेवमभाषत।
नेह वत्स्याम्यहं देव नय मां स्वं निवेशनम्॥
तथा कर्तुं महादेवः **सर्वांल्लोकानवैक्षत।**
वासार्थं रोचयामास पृथिव्यां तु द्विजोत्तमाः॥
वाराणस्यां महादेवः **सिद्धिक्षेत्रं** महेश्वरः।
दिवोदासेन तां ज्ञात्वा निविष्टां नगरीं भवः॥

1. तत्रैव।

पार्श्वे तिष्ठन्तमाहूय निकुम्भमिदमब्रवीत् ।
गणेश्वरपुरीं गत्वा शून्यां वाराणसीं कुरु ॥
मृदुनैवाभ्युपायेन अतिवीर्यः स पार्थिवः ।
ततो गत्वा निकुम्भस्तु पुरीं वाराणसीं तदा ॥
स्वप्ने संदर्शयामास मङ्कनं नाम नापितम् ।
श्रेयस्तेऽहं करिष्यामि स्थानं मे रचयानघ ॥
मद्रूपां प्रतिमां कृत्वा नगर्यन्ते निवेशय ।
ततः स्वप्ने यथादृष्टं सर्वं कारितवान् द्विजाः ॥
नगरीद्वार्यनुज्ञाप्य राजानं तु यथाविधि ।
पूजा तु महती चैव नित्यमेव प्रयुज्यते ॥
गन्धैर्धूपैश्च माल्यैश्च प्रोक्षणीयैस्तथैव च ।
अन्नपानप्रयोगैश्च अत्यद्भुतमिवाभवत् ॥
एवं सम्पूज्यते तत्र नित्यमेव गणेश्वरः ।
ततो वर्षसहस्राणि नागराणां प्रयच्छति ॥
पुत्रान् हिरण्यमायूंषि सर्वकामांस्तथैव च ।
राज्ञस्तु महिषी श्रेष्ठा सुयशा नाम विश्रुता ॥
पुत्रार्थमागता साध्वी राज्ञा देवी प्रचोदिता ।
पूजां तु विपुलां कृत्वा देवी पुत्रमयाचत ॥
पुनः पुनरथागत्य बहुशः पुत्रकारणात् ।
न प्रयच्छति पुत्रांस्तु निकुम्भः कारणेन तु ॥
राजा तु यदि नः क्रुध्येत् कार्यसिद्धिस्ततो भवेत् ।
अथ दीर्घेण कालेन क्रोधो राजानमाविशत् ॥
भूत एष महाद्वारि नागराणां प्रयच्छति ।
प्रीतो वरान् वै शतशो न किञ्चिन्नः प्रयच्छति ॥
मामकैः पूज्यते नित्यं नगर्यां मम चैव तु ।
स याचितश्च बहुशो देव्या मे पुत्रकारणात् ॥
न ददाति च पुत्रं मे कृतघ्नो बहुभोजनः ।
अतो नार्हति पूजां तु मत्सकाशाद् विशेषतः ॥
तस्मात्तु नाशयिष्यामि तस्य स्थानं दुरात्मनः ।
एवं तु स विनिश्चित्य दुरात्मा राजकिल्बिषी ॥
स्थानं गणपतेस्तस्य नाशयामास दुर्मतिः ।
भग्नमायतनं दृष्ट्वा राजानमशपत् प्रभुः ॥
यस्मादनपराधं मे त्वया स्थानं विनाशितम् ।
पुरी शून्या तथाकस्मात् तव नूनं भविष्यति ॥

ततस्तेन तु शापेन शून्या वाराणसी तदा।
शप्त्वा पुरीं निकुम्भस्तु महादेवमथागमत् ॥
तस्यां पुर्यां ततो देवो निर्ममे पदमात्मनः।
रमते तत्र वै देवो रममाणो गिरेः सुताम् ॥
न रतिं तत्र वै देवो लभते गृहविस्मयात्।
वसाम्यत्र न पुर्यां तु देवी देवमथाब्रवीत् ॥
नाहं वेश्म विमोक्ष्यामि अविमुक्तं हि मे गृहम्।
प्रहस्योवाच भगवांस्त्र्यम्बकस्त्रिपुरान्तकः ॥
तस्मात् तदविमुक्तं हि प्रोक्तं देवेन वै स्वयम्।
एवं वाराणसी शप्ता अविमुक्तं च कीर्तितम् ॥
यस्मिन् वसति वै देवः सर्वदेवनमस्कृतः।
योगेषु त्रिषु धर्मात्मा सह देव्या महेश्वरः ॥
अन्तर्धानं कलौ याति तत्पुरं तु महात्मनः।
अन्तर्हिते पुरे तस्मिन् पुरी सा वसते पुनः ॥
एवं वाराणसी शप्ता निवेशं पुनरागता ॥
× × × ×
शापस्यान्ते महाबाहुर्हत्वा क्षेमकराक्षसम्।
रम्यां निवेशयामास पुरीं वाराणसीं नृपः[1] ॥

एवं हि ब्रह्माण्डपुराणस्योपर्युक्ता गाथा भृशं स्फोरयति विविधानि तत्त्वान्यविमुक्तक्षेत्रस्य विषये। केन प्रकारेण देव्याऽभ्यर्थितः शिवः स्वनिवासार्थं पुरीमिमामङ्गीचकार? कथञ्चेयं पुरी महात्मना निकुम्भेन शप्ता? कथं वा पुरीयं देवदेवस्य महादेवस्य प्रीतिमाप? कया रीत्याऽस्याः पुर्याः शापस्थितिरपास्ता? कथञ्च सदाशिवेनेयं पुनः सिद्धिक्षेत्रत्वेन वृता? केनोपायेन चेयं पुरी 'अविमुक्ताख्याम्' सम्प्राप? इत्येवंविधानि तत्त्वानि पूर्वोदाहृतब्रह्माण्डपुराणस्य गाथायां प्रतिपादितानि।

इयमेव गाथा बीजरूपेण दृश्यते मत्स्यपुराणे। तत्रापि लोकत्रयातिशायि माहात्म्यं गीतं दृश्यते वाराणस्याः। सत्त्वसारभूतेयं दृश्यते त्रिषु लोकेषु। स्वयमविमुक्ता सती मुक्तिसोपानभूतेयं पुरी कथं न सेव्या मानवैः, यत्र साक्षाद् योगात्मा सदाशिवो निवसति। तथा च मात्स्ये पुराणे—

**योगक्षेत्रं तपःक्षेत्रं सिद्धगन्धर्वसेवितम्।**
**सरितः सागराः शैला नाविमुक्तसमा भुवि ॥**
**भूर्लोके चान्तरिक्षे च दिवि तीर्थानि यानि च।**
**अतीत्य वर्तते चान्यदविमुक्तं प्रभावतः[2] ॥**

एवं हि योगक्षेत्रभूता, तपःक्षेत्रभूता, सिद्धिक्षेत्रभूता चेयं पुरी कथं न त्रिपुराररिराजस्य प्राणभूता भवेदित्युक्त्वा विरमामीति शम्। (क्रमशः)

१. ब्रह्माण्डपुराणम्—२।६७;
१. मत्स्यपुराणम्— १८४।५४-५५।

# पुराणेषु सांख्यदर्शनप्रभाव.

स्व डॉ० श्रीकृष्णमणित्रिपाठी

पुराणेतिहासविभागाध्यक्षचरः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

तत्त्वदर्शनस्य साधनभूताया अध्यात्मविद्यायाः प्रवचनहेतुत्वात् सांख्ययोग-दर्शनमतिप्रसिद्धं सर्वव्यापकश्चास्ति । दर्शनप्रसङ्गे प्रायः सर्वेषु प्रस्थानेषु साक्षात् परम्परया वा सांख्ययोगदर्शनं स्मृतं निर्दिष्टं वा । योगविद्याविवरणप्रसङ्गे यौगिक-तत्त्वनिरूपणे वा पुराणेतिहासयोर्बहुत्र योगदर्शनस्यच्छाया दरीदृश्यते । महाभारते विशेषतः शान्तिपर्वणि, आश्वमेधिकपर्वणि, अनुशासनपर्वणि, वनपर्वणि च योग-प्रसङ्गो निभाल्यते । यथा शान्तिपर्वणि ( १०८।४५ ) महर्षिर्वसिष्ठो हिरण्यगर्भतो योगं प्राप्तवानित्युक्तम् । अपि च षड्विंशत्तत्त्वरूपेणेश्वरस्योल्लेखो विद्यते । तदिदं कथनं हैरण्यगर्भयोगरीत्यैव सङ्गच्छते । उपासनादृष्ट्या ईश्वरोऽपि तत्त्वविशेष उक्तः । योगसूत्रेऽपि 'तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः' (१।३२) इत्यत्र तत्त्वपदमीश्वरं लक्षयतीति वाचस्पतिमिश्राः । यथा योगसूत्रे 'सन्तोषादनुत्तमसुखलाभः' ( २।४२), तथैव वनपर्वणि 'सन्तोषः परमं सुखम्' ( २।४६ ) इत्युक्तम् । अपि च शान्तिपर्वणि १९५ अध्याये यो योगध्यानमार्गो वर्णितः, स पातञ्जलसूत्रानुसारी दृश्यते । योगसूत्रोक्ता 'वितर्कादयोऽपि महाभारतेऽपि तथैव प्रयुक्ताः' ( १२।१९५।१५ ) ।

लिङ्गपुराणे पूर्वार्द्धे ९ अध्याये योगविद्यावर्णनप्रसङ्गे शब्दतः साम्यं विद्यते । अत्र व्याध्यादीनां योगान्तरायाणां दुःखादिचित्तसहभुवां प्रतिमादि-विभूतीनां च विषये योगसूत्रानुकरणं दृश्यते । योगसूत्रे यथा ( १।१३०, १।३१ ) इति सूत्राभ्यां नामग्राहं योगान्तराया विक्षेपसहभुवश्चोपदिष्टाः, तथैव लिङ्ग-पुराणस्य पूर्वार्द्धे नवमाध्यायेऽपि श्लोके नामग्राहं दशप्रकारा योगान्तराया निर्दिष्टाः सन्ति—

आलस्यं प्रथमं पश्चाद् व्याधिपीडा प्रजायते ।<br>
प्रमादः संशयस्थाने चित्तस्येहानवस्थितिः ॥<br>
अश्रद्धादर्शनं भ्रान्तिर्दुःखं च त्रिविधं ततः ।<br>
दौर्मनस्यमयोग्येषु विषयेषु च योग्यता ॥<br>
दशधाऽभिप्रजायन्ते मुने ! योगान्तरायकाः[1] ।

---

१. लिङ्गपु० ९।१-२ ।

किञ्च यथा योगसूत्रे—'ते समाधावुपसर्गा व्युत्थाने सिद्धयः[१]' इत्यत्र योगोपसर्गाः, सिद्धयश्च प्रोक्ताः, तथैव लिङ्गपुराणेऽपि सङ्केतिताः सन्ति—

व्युत्थाने सिद्धयश्चैता ह्युपसर्गाः प्रकीर्तिताः ।
निरोद्धव्याः प्रयत्नेन वैराग्येण परेण तु[२] ॥

अत्रत्यं व्यासभाष्यमपि अनुकृतं दृश्यते । लिङ्गपुराणस्योत्तरार्द्धे ९३ अध्याये (३३-५२) श्लोकेषु ईश्वरविषयिणी या चर्चा वर्तते, साऽपि योगसूत्रं (१।२३-२९) भाष्यं च सर्वथा शब्दतोऽनुकरोति । पूर्वोत्तरपक्षरूपेण भाष्ये यदुक्तम्, तत्सर्वमत्र तेनैव रूपेण प्रोक्तमवलोक्यते । अतः प्रतीयते यदिदं पुराणगतं योगप्रकरणं केनापि योगप्रियेण विदुषा योगसूत्रं भाष्यञ्चाश्रित्य पश्चात् प्रक्षिप्तम् । विष्णुपुराणेऽपि यद् योगसूत्रसाम्यं शब्दतो दृश्यते, तच्च वाचस्पतिमिश्रेण स्वकीयव्याख्यायां यथा-स्थानमुपदर्शितम् । एवं वायु-मार्कण्डेयादिषु पुराणेष्वपि योगसूत्रसाम्यं विलो-क्यते । शिवपुराणस्य वायवीयसंहितायामपि योगसूत्रभाष्यानुकरणं दृश्यते । अप्पय्य-दीक्षितोऽपि शिवार्कमणिदीपिकायां योगशास्त्रं हि ईश्वरविषयकाणि सप्तसूत्राणि (१।२३-२९) शिवपुराणे परमेश्वरप्रतिपादकानि वचनानि अनुसृत्यैव कृतानि । श्रीमद्भागवतेऽपि योगसूत्रच्छाया नाविदितम्—

| श्रीमद्भागवतम्— | २।२।२५ | योगसूत्रम् | २।२६ |
|---|---|---|---|
| ,, | ४।६।९ | ,, | ४।१ |
| ,, | ११।१५।३४ | ,, | ४।१ |

जन्मौषधि-मन्त्र-तपः-समाधिजाः सिद्धयः ( योगसूत्रम् ४।१ )
जन्मौषधि-तपोमन्त्रैर्यावतीरिह सिद्धयः ।
योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजन्[३] ॥

तत्र पञ्चमस्कन्धे जडभरत-रहूगणप्रसङ्गे बहुयोगग्रन्थसम्मतम् (५।१०।१५) इत्युक्तम् । अतः प्रतीयते यद् भागवतात्प्रागपि बहवो योगा आसन् । पुत्रशोकातुरं चन्द्रकेतुं शान्त्वयितुमुपस्थितस्य दयालोर्महर्षेरङ्गिरसो देवर्षेर्नारदस्य च समक्षं चित्रकेतुद्वारा प्रस्तुतायां सिद्धेशनामगणनायां पतञ्जलेरपि नाम स्मृतम् ।

अध्यात्मयोगं ग्रथितं तवोक्तमाख्याहि कौतूहलचेतसो मे ।
यदाह योगेश्वर ! दृश्यमानं क्रियाफलं सद्व्यवहारमूलम्[४] ॥

'इदं हि योगेश्वरयोगनैपुणं हिरण्यगर्भो भगवान् जगाद यत्' इति महाभारते वदता भगवता शुकदेवेन हिरण्यगर्भयोगोऽपि स्मृतः । योगवासिष्ठेऽपि उपशम-प्रकरणे ( ७८।१९ ) इत्ययं श्लोकः स्पष्टमनुकरोति । श्रीमद्भागवतस्य प्रसिद्ध-

१. यो० सू० ३।३७;　२. लिङ्गपु० ९।५८;　३. श्रीमद्भा० ११।१५।३४ ।
४. तत्रैव—१२।३ ।

ष्टीकाकारः श्रीधरस्वामी ( ३।१२।२ ) श्लोकटीकायां 'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः' इति (२।३) योगसूत्रमुदाजहार। अन्ये वैष्णवाचार्याः स्वासु टीकासु योगसूत्राणि निर्दिष्टवन्तः सन्ति।

**पुराणेषु सांख्यदर्शनप्रभावः—**

अथैकदा देवहूतिस्तत्त्वज्ञानजिज्ञासया कपिलमुपतस्थे। तस्या अभिप्रायं विज्ञाय सञ्जातकारुण्यः स भक्तिसम्पृक्तं सांख्यतत्त्वं सविस्तरमुपदिदेश।

श्रीमद्भागवते तृतीयस्कन्धे षड्विंशतितमेऽध्याये सप्तमश्लोकादारभ्य पञ्चदशश्लोकपर्यन्तं सांख्यदर्शनपद्धतिमनुसृत्यैव प्रकृतिपुरुषादीनां सम्यग् विवेचनं कृतं विद्यते। सांख्ये यथा सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, महान्, अहङ्कारः, एकादशेन्द्रियाणि, पञ्चतन्मात्राणि, पञ्चमहाभूतानि च स्वीकृतानि, तद्वत् श्रीमद्भागवतेऽपि चतुर्विंशतितत्त्वानि प्रतिपादितानि—

प्रकृतिर्बुद्ध्यहङ्कारौ तन्मात्रैकादशेन्द्रियम्।
भूतानि चेति सामान्यं चतुर्विंशतिरेव च॥

अपि च—

प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम!
ब्रूहि कारणयोरस्य सदसच्च यदात्मकम्॥

इति देवहूतिप्रश्ने भगवान् कपिलो मातरमुवाच श्रीमद्भागवते—

यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्॥
पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः॥
महाभूतानि पञ्चैव भूरापोऽग्निमरुन्नभः।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे[1]॥

सांख्यसूत्रे यथा 'त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' (१।१) इत्यनेन मोक्षस्वरूपं प्रदर्शितम्, तथैव श्रीमद्भागवते तृतीयस्कन्धे सप्तविंशतितमेऽध्याये प्रथमश्लोकादारभ्य त्रिंशच्छ्लोकपर्यन्तं मोक्षस्य विवेचनं कृतम्।

श्रीमद्भागवतस्य चतुर्थस्कन्धे एकत्रिंशदध्याये नारदोक्तमोक्षकथनं सांख्यानुसारमेवास्ति। दशमस्कन्धे सप्तचत्वारिंशत्तमेऽध्यायेऽपि सांख्यदर्शनानुसारमेव तत्त्वोपदेशः कृतो विद्यते। एकादशस्कन्धस्यैकादशेऽध्याये बद्ध-मुक्तयोर्विषये सांख्यमतमेवावलम्बितमस्ति। ब्रह्मस्तुतौ च सांख्यमतमेवावलम्ब्य देवैर्भगवतः स्तुतिः कृता—

१. श्रीमद्भा० ३।२६।१०-११।

सत्त्वं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेय उपायनं वपुः ।
वेदक्रियायोगतपःसमाधिभिस्तवार्हणं येन जनः समीहते ।।
सत्त्वं न चेद्धातरिदं निजं भवद् विज्ञानमज्ञानभिदापमार्जनम् ।
गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः[1] ।।

सांख्ये यथा पुंप्रकृत्योर्विवेकेन मोक्षप्राप्तिः, तथैव श्रीमद्भागवतस्यैकादश-स्कन्धे चतुर्विंशतितमेऽध्यायेऽपि भगवता श्रीकृष्णेनोद्धवं प्रति सृष्टिप्रक्रियाप्रलय-प्रकारवर्णनपूर्वकं मोक्षस्वरूपं प्रदर्शितम् । सांख्यसूत्रे यथा 'न नित्यशुद्धबुद्धमुक्त-स्वभावस्य तद्योगस्तद्योगादृते' ( १।९ ) इति । सांख्यसारे च—

नित्यशुद्धो नित्यमुक्तो नित्यबुद्धो निरञ्जनः ।
स्वप्रकाशो निराधारः प्रदीपः सर्ववस्तुषु ।।

इति पद्येनात्मनो नित्यशुद्धबुद्धमुक्तस्वभावं प्रतिपादितम्, तद्वत् श्रीमद्-भागवतेऽपि—

बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ।
गुणस्य मायाभूतत्वान्न मे मोक्षो न बन्धनम् ।।
शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च मायया ।
स्वप्नो यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी[2] ।।

श्रीमद्भागवतस्य द्वादशस्कन्धे सप्तमाध्याये दशमश्लोकादारभ्य विंशति-श्लोकपर्यन्तं सांख्यरीत्यैव तत्त्वानां वर्णनं कृतमस्ति—

अव्याकृतगुणक्षोभान् महतस्त्रिवृतोऽहमः ।
भूतसूक्ष्मेन्द्रियार्थानां संभवः सर्ग उच्यते[3] ।।

सांख्ये यथा पुंप्रकृत्योर्विवेकेन मुक्तिस्तथा श्रीमद्भागवतेऽपि प्रकृतिपुरुष-विवेकेन मोक्षप्राप्तिः प्रतिपादिता—

भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः ।
नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च[4] ।।

सांख्ये यथा प्रकृतेः कारणत्वं तथा श्रीमद्भागवतेऽपि—

कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्[5] ।।

विष्णुपुराणस्य प्रथमेंऽशे द्वितीयेऽध्याये एकोनविंशतिश्लोकादारभ्य पञ्चा-शच्छ्लोकपर्यन्तं सांख्यानुसारमेव सृष्टिक्रमः प्रतिपादितः—

---

१. श्रीमद्भा० १०।२।३४-३५; २. तत्रैव—११।११।१-२; ३. तत्रैव—१२।७।११ ।
४. तत्रैव—३।२७।२४; ५. तत्रैव—२।५।१६ ।

अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमैः ।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् ॥
त्रिगुणं तज्जगद्योनिरनादिप्रभावाप्ययम् ।
तेनाग्रे सर्वमेवासीद् व्याप्तं वै प्रलयादनु[1] ॥

सांख्ये यथा पञ्चविंशतितत्त्वानि स्वीकृतानि, तथैवात्रापि । ध्रुवो हि सांख्य-तत्त्ववर्णनपुरस्सरमेव भगवतः स्तुतिं चकार श्रीमद्भागवते महापुराणे—

एकस्त्वमेव भगवन्निदमात्मशक्त्या
मायामयोरुगुणया महदाद्यशेषम् ।
सृष्ट्वानुविश्य पुरुषं सदसद्गुणेषु
नानेव दारुषु विभावसुवद्विभासि[2] ॥

मार्कण्डेयपुराणस्य चतुर्थेऽध्याये पञ्चचत्वारिंशच्छ्लोकादारभ्य त्रिपञ्चाश-च्छ्लोकपर्यन्तं सृष्टिः सांख्यानुसारमेव प्रतिपादिता—

एका मूर्तिरनिर्देश्या शुक्लां पश्यन्ति तां बुधाः ।
ज्वालामालोपरुद्धाङ्गी निष्ठा सा योगिनां परा ॥
वासुदेवाभिधानासौ निर्माणत्वेन दृश्यते ॥
द्वितीया पृथिवीं मूर्ध्ना शेषाख्या धारयत्यधः ।
तामसी सा समाख्याता तिर्यक्त्वं समुपाश्रिता ॥
तृतीया कर्म कुरुते प्रजापालनतत्परा ।
सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी[3] ॥

वायुपुराणस्य प्रक्रियापादे तृतीयेऽध्याये सांख्यानुसारमेव सृष्टिः प्रतिपादिता—

यत्तत्स्मृतं कारणमप्रमेयं ब्रह्मप्रधानं प्रकृतिः प्रसूतिः ।
आत्मा गुहो योनिरथापि चक्षुः क्षेत्रं तथैवामृतमक्षरं च[4] ॥

नारदीयपुराणस्य द्विचत्वारिंशत्तमेऽध्याये त्रयोदशश्लोकादारभ्य षट्त्रिंश-च्छ्लोकपर्यन्तं मत्स्यपुराणस्य च चतुर्थाध्याये तृतीयश्लोकतो द्वात्रिंशच्छ्लोक-पर्यन्तं सृष्टिक्रमः सांख्यरीत्यैव वर्णितः—

सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम् ।
साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्तिता ॥
केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः ।
एतदेव प्रजासृष्टिं करोति विकरोति च ॥

---

१. वि॰पु॰ १।२।१९,२१; २. श्रीमद्भा॰ ४।९।७ ।
३. मा॰ पु॰ ४।४५-४६; ४. वा॰ पु॰ १।३।६ ।

दिव्येयमादिसृष्टिस्तु रजोगुणसमुद्भवा ।
अतीन्द्रियेन्द्रिया तद्वदतीन्द्रियशरीरका ॥
दिव्यतेजोमयी भूप ! दिव्यज्ञानसमुद्भवा ।
न मर्त्यैरभितः शक्या वक्तुं वै मांसचक्षुषा[१] ॥

देवीभागवतस्य सप्तमस्कन्धे द्वात्रिंशदध्याये प्रकृतितत्त्वनिरूपणं सांख्यानुसारमेव कृतम्—

केचित्तां तप इत्याहुस्तमः केचिज्जडं परे ।
ज्ञानं मायां प्रधानं च प्रकृतिं शक्तिमप्यजाम् ॥
विमर्श इति तां प्राहुः शैशवशास्त्रविशारदाः[२] ।

वाराहपुराणस्य द्वितीयेऽध्याये षष्ठश्लोकात् पञ्चविंशतिश्लोकपर्यन्तं सांख्यानुसारमेव सृष्टिक्रमः प्रतिपादितः—

आदावहं व्योम महत्ततोऽणुरेकैव मत्तः प्रबभूव बुद्धिः ।
त्रिधा नु सा सत्त्वरजस्तमोभिः पृथक् पृथक् सत्त्वरूपैरुपेता[३] ॥

अपि च द्विपञ्चाशत्तमेऽध्याये प्रथमश्लोकादारभ्य पञ्चविंशतिश्लोकपर्यन्तं मोक्षस्य निरूपणं सांख्यरीतिमनुसृत्यैव प्रतिपादितम् ।

ब्रह्मवैवर्तपुराणे प्रकृतिखण्डे प्रथमाध्याये चतुर्थश्लोकतोऽष्टमश्लोकपर्यन्तं प्रकृतिशब्दार्थमभिधाय सांख्यानुसारमेव सृष्टिः प्रतिपादिता—

प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः ।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता ॥
गुणे प्रकृष्टसत्त्वे च प्रकाशो वर्तते श्रुतौ ।
मध्यमे कृश्च रजसि तिशब्दस्तमसिस्थितः ॥
त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता ।
प्रधानसृष्टिकरणे प्रकृतिस्तेन कथ्यते ॥
प्रथमे प्रवर्तते प्रश्च कृतिश्च सृष्टिवाचकः ।
सृष्टेराश्रया या देवी प्रकृतिः सा प्रकीर्तिता ॥
योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः ।
पुमांश्च दक्षिणार्द्धाङ्गो वामाङ्गः प्रकृतिः स्मृता[४] ॥

कूर्मपुराणस्य पूर्वार्द्धे चतुर्थाध्याये पञ्चदशश्लोकतस्त्रयस्त्रिंशच्छ्लोकपर्यन्तं सांख्यानुसारं सृष्टिक्रमं सप्तमेऽध्याये च सर्गक्रममुक्त्वा प्रकृतिपुरुषविवेचनं सांख्यरीतिमनुसृत्यैव कृतम्—

---

१. मत्स्यपु० ४.३-४;
२. दे० भा० ७।३२।९-१० ।
३. वा० पु० २।२६;
४. ब्र० वै० पु० १।४-८ ।

अव्यक्तं कारणं यत्तत्तन्नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिश्चेति यमाहुस्तत्त्वचिन्तकाः[१] ॥

अपि च—

सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा ।
अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः[२] ॥

भविष्यपुराणस्य ब्रह्मपर्वणि द्वितीयाध्याये त्रिंशच्छ्लोकतो द्वात्रिंशच्छ्लोकपर्यन्तं लिङ्गपुराणे च तृतीयाध्यायस्य द्वितीयश्लोकतस्त्रयस्त्रिंशच्छ्लोकपर्यन्तं सांख्यरीत्यैव सृष्टिक्रमो दर्शितः—

प्रधानं प्रकृतिश्चेति यदाहुर्लिङ्गमुत्तमम् ।
गन्धवर्णरसैर्हीनं शब्दस्पर्शादिवर्जितम् ॥

अव्यक्तादिविशेषान्तं विश्वं तस्याः समुच्छ्रितम् ।
विश्वधात्रीत्वजाख्या च शैवी सा प्रकृतिः स्मृता[३] ॥

शिवपुराणस्य वायवीयसंहितायां नवमेऽध्याये षष्ठश्लोकतश्चतुर्विंशतिश्लोकपर्यन्तं सांख्यानुसारमेव सर्गक्रमोऽभिहितः । तत्रैवैकादशाध्याये च—

प्रधानात् प्रथमं जज्ञे बुद्धिः ख्यातिर्मतिर्महान् ।
महत्तत्त्वस्य संक्षोभादहङ्कारस्त्रिधाऽभवत् ॥
अहङ्कारश्च भूतानि तन्मात्राणीन्द्रियाणि च ।
वैकारिकादहङ्कारात् सत्त्वोद्रिक्तात्तु सात्त्विकः ॥
वैकारिकः स सर्गस्तु युगपत् संप्रवर्तते[४] ।

ब्रह्मपुराणस्य द्वात्रिंशदधिकशततमेऽध्याये चतुर्विंशतितत्त्वानां निरूपणं कृत्वा प्रकृतिस्वरूपप्रदर्शनपूर्वकं त्रयो लयप्रकारो दर्शितः—

प्रधानं तस्य संयोगादुत्पन्नं सुमहत्परम् ।
अहङ्कारो महातेजाः प्रजापतिनमस्कृतम् ॥
अव्यक्ताद्व्यक्तिमापन्नं विद्यासर्गं वदन्ति तम् ।
महान्तमेभिः सहितं प्रकृतिर्ग्रसते द्विजाः ॥
गुणसाम्यमनुद्रिक्तमन्यूनं च द्विजोत्तमाः ।
प्रोच्यते प्रकृतिर्हेतुः प्रधानं कारणं परम् ॥
इत्येषा प्रकृतिः सर्वा व्यक्ताव्यक्तस्वरूपिणी ।
व्यक्तस्वरूपमव्यक्ते तस्यां विप्र प्रलीयते ॥
एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान्[५] ।

---

१. कू० पु० ४।६; २. तत्रैव—७।१ । ३. लिङ्गपु० ३।१२ ।
४. शिवपु० १२।५-७; ५. ब्रह्मपु० १३२।३०-३५ ।

गरुडपुराणस्य त्रिंशदुत्तरद्विशततमेऽध्याये चतुर्थाध्याये च सृष्टिः सांख्यानुसारमेव वर्णिता—

अनादिनिधनो धाता त्वनन्तः पुरुषोत्तमः।
तस्माद् भवति चाव्यक्तं तस्मादात्माऽपि जायते॥
तस्माद् बुद्धिर्मनस्तस्मात्ततः खं पवनस्ततः।
तस्मात्तेजस्ततस्त्वापस्ततो भूमिस्ततोऽभवत्॥

अग्निपुराणस्य सप्तदशाध्याये द्वितीयश्लोकादारभ्य षष्ठश्लोकपर्यन्तं सांख्यतत्त्वमवलम्ब्य सर्गक्रमो दर्शितः—

प्रकृतिं पुरुषं विष्णुः प्रविश्याक्षोभयत्ततः।
सर्गकाले महत्तत्त्वमहङ्कारस्ततोऽभवत्॥
अहङ्कारात्तामसात्तु तैजसानीन्द्रियाणि च।
वैकारिका दश देवा मन एकादशेन्द्रियम्[1]॥

एवमेव पद्मपुराणस्य सृष्टिखण्डे ब्रह्माण्डपुराणस्य प्रकृतिखण्डे चतुर्थाध्याये प्रथमश्लोकतो विंशतिश्लोकपर्यन्तं सांख्यानुसारमेव सर्गक्रमो दर्शितः—

आत्मन्यवस्थिते व्यक्ते विकारे प्रतिसंहृते।
साधर्म्येणातितिष्ठन्ते प्रधानपुरुषौ तदा॥
तमस्तत्त्वगुणावेतौ समत्वेन व्यवस्थितौ।
अनुद्रिक्तावनुचरौ तेन प्रोक्तौ परस्परम्॥
गुणसाम्ये लयो ज्ञेय आधिक्ये सृष्टिरुच्यते।
सत्त्ववृद्धौ स्थितिरभूद् ध्रुवं पञ्चशिखस्थितम्[2]॥

एवं हि दृश्यते यत् साङ्ख्यदर्शनस्य तत्त्वानि पुराणवाङ्मये कामं सुपुष्पितानि, फलितानि च। धन्येयं पुराणप्रणयनशैली, यस्यां सुगूढानि गम्भीरतराणि च दर्शनतत्त्वानि सहजतया सुगुम्फितानीति शम्।

---

१. अग्निपु० १७।२-६; २. ब्र० पु० ४।१-३।

# गायत्री-मन्त्र ( सावित्री ) का परिचय एवं महत्त्व

डॉ० रामशरण वाजपेयी,

एम० ए०, पी-एच्० डी०, साहित्याचार्य, साहित्यरत्न



वैदिक-साहित्य का अध्ययन करने पर ज्ञात होता है कि गायत्री-मन्त्र, जो सावित्री-मन्त्र है, गायत्री छन्द होने के कारण यही सावित्री-मन्त्र गायत्री-मन्त्र के नाम पर रूढ़ हो गया है। वैदिक-काल से अद्यावधि इसे गायत्री-मन्त्र के नाम से समस्त वेदाधिकारी द्विज जानते हैं। मनुस्मृति और सायणभाष्य में जो वेद के अधिकारी बताये गये हैं, उनमें स्त्री, शूद्र एवं द्विज, बन्धू ये वेद के अधिकारी नहीं है। वेद के अध्ययन के अधिकारी वही होते थे, जो उपनयन-संस्कार से युक्त हों अथवा वेद-गुरु उनका यज्ञोपवीत-संस्कार करके गायत्री-मन्त्र की दीक्षा दिये हों।

गायत्री-मन्त्र का वैदिक साहित्य में कितना महत्त्व है, इस पर भी प्रकाश डाला जा रहा है। गायत्री-मन्त्र में सवितृ देवता की उपासना की गयी है। यह मन्त्र चारों वेदों में मिलता है। ऋग्वेद ( ३।६२।१० ), यजुर्वेद ( ३६।३, ३०।२।२२।९ ) तथा सामवेद की संहिताओं में गायत्री-मन्त्र उपलब्ध होता है। अथर्ववेद की संहिता में यह मन्त्र नहीं मिलता; लेकिन इसके ब्राह्मण गोपथ में यह मन्त्र, इसका विविध प्रकार का स्वरूप-परिचय एवं महत्त्व का उल्लेख मिलता है[1]।

अथर्ववेद की संहिता में यद्यपि मन्त्र नहीं मिलता है; तथापि उसमें गायत्री मन्त्र की ओर संकेत प्राप्त होता है। इसके साथ-साथ उसमें गायत्री को वेद-माता कहकर उनसे अर्थ, यश, पुत्रादि की प्राप्ति की कामना की गयी है, जैसा कि निम्न उदाहरण से ज्ञात है—

स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी द्विजानाम्।
आयुः प्राणं प्रजां पशुं कीर्ति द्रविणं ब्रह्मवर्चसं मह्यं दत्वा व्रजत ब्रह्मलोकम्[2]॥

इस प्रकार अथर्ववेद के इस मन्त्र में गायत्री को वेदमाता तथा द्विजों को पवित्र करने वाली कहा गया है एवं उससे आयु, प्राण, प्रजा, पशु, कीर्ति, द्रविण, और ब्रह्मवर्चस् आदि की प्राप्ति की कामना की गयी है और यह कहा गया है कि इन सब को देकर वह ब्रह्मलोक को जाएँ।

---

१. गोपथब्राह्मण—१।१।३२-३३; २. अथर्ववेद—१९।७१।१।

गोपथ-ब्राह्मण भी अपनी संहिता का अनुकरण करता हुआ गायत्री-मन्त्र की रहस्यमयी व्याख्या प्रस्तुत करता है, जो इस प्रकार द्रष्टव्य है—**'भोः कः सविता, का सावित्री[1] ?'**

इस उदाहरण के द्वारा प्रश्नोत्तर शैली का अवलम्बन करके गायत्री-मन्त्र का परिचय दिया गया है और इस प्रश्न के उत्तर में इसका निम्न प्रकार परिचय प्रस्तुत किया गया है—'मन एव सविता, वाक् सावित्री, यत्र ह्येव मनस्तद् वाक्, यत्र वै वाक्, तन्मनः, इत्येते द्वे योनी एकं मिथुनम्, अग्निरेव सविता, पृथिवी सावित्री, यत्र ह्येवाग्निस्तत् पृथिवी, यत्र वै पृथिवी तदग्निरित्येते द्वे योनी एकं मिथुनं, वायुरेव सविताऽन्तरिक्षं सावित्री यत्र ह्येव वायुस्तदन्तरिक्षं, यत्र वा अन्तरिक्षं तद्वायुरित्येते द्वे योनी एकं मिथुनम्, आदित्य एव सविता द्यौः सावित्री यत्र ह्येवादित्यस्तद् द्यौर्यत्र वै द्यौस्तदादित्य इत्येते द्वे योनी एकं मिथुनम्, चन्द्रमा एव सविता, नक्षत्राणि सावित्री, यत्र ह्येव चन्द्रमास्तन्नक्षत्राणि, तच्चन्द्रमा, इत्येते द्वे योनी एकं मिथुनम्, अहरेव सविता, रात्रिः सावित्री, यत्र ह्येवाहस्तद्रात्रिर्यत्र वै रात्रिस्तदहरित्येते एकं मिथुनम्, उष्णमेव सविता, शीतं सावित्री, यत्र ह्येवोष्णम्, तच्छीतं, यत्र वै शीतं तदुष्णमित्येते द्वे योनी एकं मिथुनम्, अभ्रमेव सविता, वर्षं सावित्री, यत्र ह्येवाभ्रन्तद्वर्षं यत्र वै वर्षं तदभ्रमित्येते द्वे योनी एकं मिथुनम्, विद्युदेव सविता, स्तनयित्नुस्तद्विद्युदित्येते द्वे योनी एकं मिथुनम्, प्राणा एव सविता अन्नं सावित्री, यत्र ह्येव प्राणस्तदन्नं यत्र वा अन्नं तत् प्राण इत्येते द्वे योनी एकं मिथुनम्, वेदा एव सविता, छन्दांसि सावित्री, यत्र ह्येव वेदास्तच्छन्दांसि यत्र वै च्छन्दांसि तद् वेदा इत्येते द्वे योनी एकं मिथुनम्, यज्ञ एव सविता, दक्षिणा सावित्री यत्र ह्येव यज्ञस्तत् दक्षिणा; यत्र वै दक्षिणास्तद् यज्ञ इत्येते द्वे योनी एकं मिथुनम्'[2] ।

अर्थात्—मन ही सविता है, और वाक् सावित्री है। जहाँ मन है, वहीं वाणी है। जहाँ वाणी है, वहाँ मन है। इस प्रकार दो योनियाँ और एक मिथुन है। अग्नि ही सविता है और पृथिवी सावित्री है। जहाँ अग्नि है, वहीं पृथिवी है और जहाँ पृथिवी है, वहीं अग्नि है। इस प्रकार दो योनियाँ और एक मिथुन है। वायु ही सविता है, अन्तरिक्ष सावित्री है। जहाँ वायु है वहीं अन्तरिक्ष है, जहाँ अन्तरिक्ष है, वहीं वायु है। इस प्रकार दो योनियाँ और एक मिथुन है। आदित्य ही सविता हैं द्युलोक सावित्री है, जहाँ आदित्य है, वहीं द्युलोक है, जहाँ द्युलोक है, वहीं आदित्य है। इस प्रकार दो योनियाँ और एक मिथुन है। चन्द्रमा ही सविता है, नक्षत्र सावित्री हैं, जहाँ चन्द्रमा है, वहीं नक्षत्र हैं और जहाँ नक्षत्र हैं, वहीं चन्द्रमा है। इस प्रकार दो योनियाँ और एक मिथुन है। दिन ही सविता

१. गोपथब्राह्मण—१।१।३२; २. गोपथब्राह्मण—१।१।३३ ।

है, रात्रि सावित्री है, जहाँ दिन है, वहीं रात्रि है और जहाँ रात्रि है, वहीं दिन है। इस प्रकार दो योनियाँ और एक मिथुन है। उष्ण ही सविता है, शीत सावित्री है। जहाँ उष्ण है, वहीं शीत है और जहाँ शीत है, वहीं उष्ण है। इस प्रकार दो योनियाँ और एक मिथुन है। आकाश सविता है, वर्ष सावित्री है। जहाँ आकाश है, वहीं वर्ष है और जहाँ वर्ष है, वहीं आकाश है। इस प्रकार दो योनियाँ एक मिथुन है। विद्युत् ही सविता है, उसकी चमक सावित्री है। जहाँ विद्युत् है, वहीं चमक है, जहाँ चमक है, वहीं विद्युत् है। इस प्रकार दो योनियाँ एक मिथुन है। प्राण ही सविता है, अन्न सावित्री है। जहाँ प्राण है, वहीं अन्न है, जहाँ अन्न है, वहीं प्राण है। इस प्रकार दो योनियाँ, एक मिथुन है। वेद ही सविता हैं, छन्द गायत्री हैं, जहाँ वेद हैं, वहीं छन्द हैं, जहाँ छन्द हैं, वहीं वेद हैं। इस प्रकार दो योनियाँ और एक मिथुन है। यज्ञ ही सविता है और दक्षिणा सावित्री है, जहाँ यज्ञ है, वहीं दक्षिणा है, जहाँ दक्षिणा है, वहीं यज्ञ है। इस प्रकार दो योनियाँ और एक मिथुन है।

इस प्रकार पुरुष-वाचक को सविता और स्त्री-वाचक को सावित्री कहा गया है; जब कि व्याकरण में सवितृशब्द नपुंसक लिङ्ग में प्रयुक्त होता है; परन्तु आर्ष-प्रयोग अधिक प्रमाणित माना जाता है। दोनों में दम्पतित्व की स्थापना करके अन्योन्याश्रयभाव की स्थापना की गयी है। दोनों ही एक दूसरे से अभिन्न और समवाय सम्बन्ध से युक्त हैं। इसमें गायत्री को स्त्री और पुरुष दोनों तत्त्वों में देखा जाता है। जिस प्रकार ब्रह्म स्त्री-पुरुषादि सब कुछ है, उसी प्रकार गायत्री की व्यापकता पर गोपथ-ब्राह्मण ही प्रकाश डालता है। इस प्रकार का परिचय वैदिक साहित्य में अन्यत्र दुर्लभ है।

गायत्री-शक्ति ब्रह्मस्वरूप है, वही दृश्यादृश्य पदार्थों के रूप में भासती है। वही आद्याशक्ति है, इसीलिए वैदिक-काल से आद्यावधि वैदिक और याज्ञिक पण्डितों ने इसे इतना महत्त्व दिया। इस मन्त्र का जप नित्यविधि और अपना धर्म समझा गया है। प्राचीनकाल से परम्परा रही है कि कोई भी द्विज (ब्राह्मण) यजमान के लिए सभी मन्त्रों का अनुष्ठान कर देता है; परन्तु गायत्री-मन्त्र का जप दूसरे के लिये एकवार भी नहीं करता। गायत्री वेद तथा द्विजों की माता है, इसलिए इसको किसी को नहीं दिया जाता है। परम्परया माता के अतिरिक्त बहन-बेटी आदि का दान विहित है; परन्तु माता होने के कारण माता को किसी को नहीं दिया जाता है। अनुजा, तनुजा की भाँति अन्य मन्त्रों का अनुष्ठान अन्य के लिए किया जाता है। गायत्री माता होने से, उसका अर्थ नहीं किसी को बताना चाहिए। अर्थ करना या बताना उसे अनावृत करना है। माता को अनावृत नहीं करना चाहिए, इसीलिए यह मन्त्र गुह्य एवं गोप्य है।

आजकल गायत्री-मन्त्र को आर्य-समाजी तथा अन्य लोग सभी को मन्त्र का अर्थ भी बताते हुए जोर-जोर से उच्चारण करके उपदेश करते देखा जाता है, जो अनुचित एवं वैदिक-परम्परा के विरुद्ध है।

मन्त्र का अर्थ ही है, जो मननात्मक है, अर्थात् मन्त्र का उच्चारण ओष्ठ हिले पर ध्वनि बाहर न सुनायी पड़े, जैसा कि परम्परा से होता चला आ रहा है। वही प्रमाणित भी है। इस मत से सुतरां विद्वज्ज्जन सहमत होंगे।

गोपथब्राह्मण के एक स्थल पर गायत्री-मन्त्र की व्याख्या भी की गयी है, जो अर्थ निषेध की परम्परा का विरोध नहीं है। यह व्याख्या रहस्यात्मक और दूसरे प्रकार की है—'ब्रह्म हेदं श्रियं प्रतिष्ठामायतनमैक्षत तत्तपस्व यदि तद् व्रते ध्रियते, तत्सत्ये प्रत्यतिष्ठत्, स सविता सावित्र्या ब्राह्मणं सृष्ट्वा तत् सावित्रीं पर्य्यदधात् तत् सवितुर्वरेण्यमिति सावित्र्याः प्रथमः पादः, पृथिव्यर्थं समदधादृचाग्निमाग्नि-श्रियं, श्रिया स्त्रियं, स्त्रिया मिथुनं, मिथुनेन प्रजां, प्रजया कर्म, कर्म्मणा तपः, तपसा सत्यं, सत्येन ब्रह्म, ब्रह्मणा ब्राह्मणं, ब्राह्मणेन व्रतं, व्रतेन वै ब्राह्मणः संशितो भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नोऽस्य तन्तुरविच्छिन्नजीवनं भवनं भवति, य एवं वेद यच्चैवं विद्वानेवमेतं सावित्र्याः प्रथमं पादं व्याचष्टे[1]'।

अर्थात्—निश्चितरूप से ब्रह्म ने इस 'श्री' को प्रतिष्ठा के आयतन के रूप में ईक्षण किया और कहा तप करो। यदि वह व्रत को धारण करता है, तो सत्य में प्रतिष्ठित होता है। उस सविता ने सावित्री के द्वारा ब्राह्मण की सृष्टि करके उसमें सावित्री को धारण किया। **'तत् सवितुर्वरेण्यम्'** यह सावित्री का प्रथम पाद है। पृथ्वी से ऋचा को, ऋचा से अग्नि को अग्नि से श्री को धारण किया। श्री से स्त्री को, स्त्री से मिथुन को, मिथुन से प्रजा को, प्रजा से कर्म को, कर्म से तप को, तप से सत्य को, सत्य से ब्रह्म को, ब्रह्म से ब्राह्मण को, ब्राह्मण से व्रत को धारण किया। इसी व्रत से ब्राह्मण प्रशंसित होता है, अशून्य होता है, अविच्छिन्न होता है, इसका प्रजातन्तु अविच्छिन्न होता है। जो विद्वान् सावित्री के प्रथम पाद की ऐसी व्याख्या करता है।

इसके द्वितीय पाद से जो सृष्टि इत्यादि हुई, वह भी इस प्रकार द्रष्टव्य है—'भर्गो देवस्य धीमहीति सावित्र्या द्वितीयः पादोऽन्तरिक्षेण यजुः समदधात् यजुषा वायुं, वायुनाऽभ्रं, अभ्रेण वर्षं, वर्षेणौषधिवनस्पतीनोषधिवनस्पतीभिः पशून्, पशुभिः कर्म, कर्मणा तपस्तपसा सत्यं, सत्येन ब्रह्म, ब्रह्मणा ब्राह्मणं, ब्राह्मणेन व्रतं, व्रतेन वै ब्राह्मणः शंसितो भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नोऽस्य

1. गोपथब्राह्मण—१।१।३४।

तन्तुरविच्छिन्नं जीवनं भवति। य एवं वेद यश्चैवं विद्वानेवमेतं सावित्र्या हि द्वितीयं पादं व्याचष्टे'[1]।

अर्थात्—'**भर्गो देवस्य धीमहि**' इस सावित्री के द्वितीय पाद ने अन्तरिक्ष से यजु को, यजु से वायु को, वायु से आकाश को, आकाश से वृष्टि को, वृष्टि से औषधि-वनस्पतियों को, औषधि-वनस्पतियों से पशुओं को, पशुओं से कर्म को, कर्म से तप को, तप से सत्य को, सत्य से ब्रह्म को, ब्रह्म से ब्राह्मण को, ब्राह्मण से व्रत को धारण किया। व्रत से ब्राह्मण प्रशंसित होता है, अशून्य होता है, अविच्छिन्न होता है। जो इस प्रकार जानता है, वही जो सावित्री द्वितीय-पाद की व्याख्या करता है।

सावित्री के तृतीय पाद की व्याख्या गोपथ-ब्राह्मण इस प्रकार प्रस्तुत करता है—"**धियो यो नः प्रचोदयात्**" इति सावित्र्यास्तृतीयः पादो दिवा साम समदधात् साम्नादित्यमादित्येन रश्मीन् रश्मिभिर्वर्षं, वर्षेणौषधिवनस्पतिनोषधिवनस्पतीभिः पशून् पशुभिः कर्म कर्मणां तपस्तपसा सत्यं, सत्येन ब्रह्म, ब्रह्मणा ब्राह्मणं, ब्राह्मणेन व्रतं, व्रतेन वै ब्राह्मणः शंसितो भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नोऽस्य तन्तुरविच्छिन्नं जीवनं भवति, य एवं वेद यश्चैवं विद्वानेवमेतं सावित्र्यास्तृतीयं पादं व्याचष्टे[2]'।

अर्थात्—'**धियो यो नः प्रचोदयात्**' यह सावित्री का तृतीय पाद है, इससे द्यौ के द्वारा साम को, साम से आदित्य को, आदित्य से रश्मियों को, रश्मियों से वृष्टि को, वृष्टि से औषधि-वनस्पति को, औषधि-वनस्पतियों से पशुओं को, पशुओं से कर्म को, कर्म से तप को, तप से सत्य को, सत्य से ब्रह्म को, ब्रह्म से ब्राह्मण को, ब्राह्मण से व्रत को धारण किया। व्रत से ब्राह्मण प्रशंसित होता है। अशून्य होता है। अविच्छिन्न होता है, इसका प्रजातन्तु अविच्छिन्न होता। जो ऐसा जानता है तथा इस सावित्री के तृतीय-पाद की व्याख्या करता है, वही विद्वान् ब्राह्मण है।

गायत्री-मन्त्र की रहस्यात्मक व्याख्या के साथ और भी स्थल दर्शनीय हैं कि विद्वान् ब्राह्मण के द्वारा ब्रह्म अभिपन्न, ग्रसित और परामृष्ट होता है। ब्रह्म के द्वारा आकाश, आकाश से वायु, वायु से ज्योति, ज्योति से जल, जल से भूमि, भूमि से अन्न, अन्न से प्राण, प्राण से मन, मन से वाणी, वाणी से वेद, वेद से यज्ञ, अभिपन्न, ग्रसित और परामृष्ट होते हैं। इस प्रकार यह बारह ( द्वादश ) महाभूत प्रतिष्ठित होते हैं, उनमें यज्ञ सर्वश्रेष्ठ है[3]। इसके अतिरिक्त गोपथ-ब्राह्मण[4] में और

---

१. गोपथब्राह्मण—१।१।३५;
२. वही—१।१।३६।
३. वही—१।१।२७;
४. वेदान्तसूत्र का दूसरा सूत्र।

भी स्थल दर्शनीय हैं। इस मन्त्र की दार्शनिक व्याख्या इस भाँति वैदिक साहित्य ही नहीं, अपितु सर्वत्र दुर्लभ है। गोपथब्राह्मण ( १।१।३१–३८ ) तक की सभी कण्डिकाएँ सावित्री उपनिषद् के नाम से जानी जा सकती हैं; क्योंकि इसमें गायत्री-मन्त्र को ब्रह्म की भाँति माना है। सृष्टि आदि का कारण मुख्यतः ब्रह्म ही होता है। यह ब्रह्म की शक्ति है, जिससे सृष्टि प्रक्रिया का द्योतन होता है। वेदान्त-सूत्र में ब्रह्म का यही लक्षण किया गया है, यथा—**'जन्माद्यस्य यतः'**[1]।

अर्थात्—जन्म इत्यादि जिससे होते हैं, वहीं ब्रह्म होता है। इसी को भगवत् पाद शङ्कराचार्य एवं रामानुजाचार्य ने अपने-अपने भाष्य[2] में ब्रह्म के इसी लक्षण को स्वीकार किया है। यहाँ वेदान्तसूत्र का तीसरा सूत्र भी सावित्री के ब्रह्म होने की पुष्टि करता है, यथा—**'शास्त्रयोनित्वात्'**।

अर्थात् ब्रह्म का ज्ञान शास्त्रों से होता है, अथवा ब्रह्म के द्वारा शास्त्र उत्पन्न हुए, जैसा कि उदाहरण में बताया गया कि सावित्री के प्रथम, द्वितीय और तृतीय पाद से वेद, यज्ञ, ब्राह्मण, व्रत और लोक इत्यादि की सृष्टि का होना गोपथ-ब्राह्मण सिद्ध करता है। अतः यह कहा जा सकता है कि **'सविता एव ब्रह्म, सावित्री तस्य शक्तिः।'**

बृहदारण्यकोपनिषद् में इसका महत्त्व और भी दर्शनीय है[3]। आपस्तम्ब-धर्मसूत्र ( १।१।१।१० ) भी द्रष्टव्य है। मनुस्मृति में गायत्री-मन्त्र के महत्त्व को पूर्णरूपेण स्पष्ट किया गया है तथा उसकी उपयोगिता पर भी प्रकाश डाला गया है। गायत्री-मन्त्र का प्रचार-प्रसार होता रहा है। यथा—

**त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।**
**तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः**[4] ॥

अर्थात् परमेष्ठी ब्रह्मा ने ऋक् आदि तीनों वेदों से 'तत्' इस सावित्री का एक-एक पाद निकाला है—

**एतदक्षरमेतां च जपन्व्याहृतिपूर्विकाम्।**
**संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते**[5] ॥

अर्थात् इस ( ॐ ) को तथा तीनों व्याहृतियों ( भूर्भुवः स्वः ) के सहित सावित्री ( तत् ) को दोनों सन्ध्याओं ( प्रातः-सायं ) में जपता हुआ वेदवित् द्विज वेद के पुण्य से युक्त होता है—

---

१. गोपथब्राह्मण—१।१।३८;
२. श्रीभाष्य, सूत्र—२।
३. बृहदारण्यकोपनिषद—१४।१।६;
४. मनुस्मृति—२।७७।
५. वही—२।७८।

**सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः ।**
**महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते[1] ।।**

अर्थात्—इन तीनों प्रणव, व्याहृतियों और सावित्री को बाहर प्रतिदिन एक सहस्र वार एक मास तक जपने वाला द्विज केंचुली से निकलते हुए सर्प के समान बड़े से बड़े पाप से छूट जाता है ।

**एतयर्चा विसंयुक्तः काले च क्रियया स्वया ।**
**ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु[2] ।।**

अर्थात्—इन तीनों ऋचाओं तथा समय पर की जानेवाली क्रियाओं से हीन ब्राह्मण, क्षत्रिय, वैश्य सज्जनों में निन्दा को प्राप्त होते हैं । जो गायत्री-मन्त्र को जानता है, वही यज्ञ का, वेद का अधिकारी होता है । जो ब्राह्मण गायत्री-मन्त्र के रहस्य को जानता है, वह यज्ञ में सर्वप्रथम स्थान प्राप्त करता है । यहाँ यह भी स्पष्ट करना आवश्यक है कि ब्राह्मण का लक्षण क्या है ? आजकल समाज में कहा जाता है कि 'ब्रह्म जानाति सः ब्राह्मणः' यह लक्षण मान्य भी है । यहाँ 'ब्रह्म' शब्द के तीन अर्थ हैं । वेद, यज्ञ और मन्त्र । ब्रह्मशब्द में 'अण्' प्रत्यय करने से ब्राह्मण-शब्द निष्पन्न होता है । इस प्रकार वेद को जानने वाला. यज्ञ ही जिसका मुख्य कर्त्तव्य है, उसी वर्ण-विशेष का नाम ब्राह्मण है, यह जात्या है, कर्मणा नहीं ।

गायत्री-मन्त्र की महत्ता वैदिक-काल से पुराणों के समय तक अविच्छिन्न रूप से देखी जाती है । गायत्री का जप नित्य करना चाहिए । जप-यज्ञही श्रेष्ठ है, यथा—'गायत्रीं वै जपेन्नित्यं जपयज्ञः प्रकीर्त्तितः[3] । और भी गायत्री के महत्त्व को यदि तुला पर रख कर तौला जाय, तो उसे तौला नहीं जा सकता है; यदि एक पक्ष में चारों वेद रखे जाँय और दूसरी ओर गायत्री, फिर भी गायत्री ही गरीयसी सिद्ध होती है—

**गायत्रीं चैव वेदांश्च तुलयाऽतोलयत् प्रभुः ।**
**एकतश्चतुरो वेदान् गायत्रीं च तथैकतः[4] ।।**

पुनः गायत्री मन्त्र के जप की विधि भी इस प्रकार है । ओंकार का आदि में उच्चारण करे, उसके बाद व्याहृतियों का उच्चारण करे, तदनन्तर सावित्री-मन्त्र का उच्चारण एकाग्र मनसा, श्रद्धया करना चाहिए । यथा—

**ओंकारमादितः कृत्वा व्याहृतींस्तदनन्तरम् ।**
**ततोऽधीयीत सावित्रीमेकाग्रः श्रद्धयान्वितः[5] ।।**

---

१. मनुस्मृति—२।७९; २. वही—२।८०; ३. कूर्मपुराण—२।१४।१९ ।
४. वही—२।१४।५०; ५. वही—२।१४।५१ ।

जो नित्यप्रति इस वेद-माता गायत्री का जप करता है, वह द्विजों में श्रेष्ठ होता है। यथा--

'योऽधीतेऽहन्यहन्येतां गायत्रीं वेदमातरम्[1]।'

गायत्री वेद-जननी है, वह लोकों को पवित्र करने वाली है। 'गायत्री वेद-जननी गायत्री लोकपावनी'[2]।

इस प्रकार मन्त्र के विषय में इतना संक्षिप्त परिचय प्रस्तुत है, जिसको देखकर लेखक भी यह कह सकता है। गायत्री द्विज के लिए नितान्त आवश्यक है **''मातॄणां मध्ये गायत्री एव गरीयसी''**।

इस लेख से समस्त पाठकगण लाभान्वित होंगे तथा ऐहिक और आमुष्मिक सुखों को प्राप्त कर गायत्री के प्रति अभिमुख होंगे, ऐसी आशा है।



---

१. कूर्मपुराण—२।१४।५५; २. वही—२।१४।५६।

उदन्वत्पूर्तिहेतुश्चोदारत्साहप्रवर्धिनी ।
उद्वेगघ्न्युष्णशमनी उष्णरश्मिसुतप्रिया ॥
उत्पत्तिस्थितिसंहारकारिण्युपरि चारिणी ।
ऊर्जंवह १०न्त्यूर्जधरोर्जावती चोर्मिमालिनी ॥
ऊर्ध्वरेतः प्रियोर्ध्वाध्वाह्यूर्मिलोर्ध्वगतिप्रदा ।
ऋषिवृन्दस्तुतर्द्धिश्च ऋणत्रयविनाशिनी १२० ॥
ऋतम्भरर्द्धिदात्री च ऋक्स्वरूपा ऋजुप्रिया ।
ऋक्षमार्गवहर्क्षार्चिर्ऋजुमार्गप्रदर्शिनी ॥
एधिताऽखिलधर्मार्था त्वेकैकामृतदायिनी १३० ।
एधनीयस्वभावेज्या त्वेजिताशेषपातका ॥
ऐश्वर्यदैश्वर्यरूपा ह्यैतिह्यं ह्यैन्दवीद्युतिः ।
ओजस्विन्योषधीक्षेत्रमोजोदौ१४० दनदायिनी ॥
ओष्ठामृतौन्नत्यदात्री त्वौषधम्भवरोगिणाम् ।
औदार्यचञ्चुरौपेन्द्री त्वौग्री ह्यौमेयरूपिणी ॥
अम्बराध्ववहाऽम्बष्ठा१५०म्बरमालाऽम्बुजेक्षणा ।
अम्बिकाऽम्बुमहायोनिरन्धोदाऽन्धकहारिणी ॥
अंशुमाला ह्यंशुमती त्वङ्गीकृतषडानना ।
अन्धतामिस्रहन्त्र्य१६०न्धुरञ्जना ह्यञ्जनावती ॥
कल्याणकारिणी काम्या कमलोत्पलगन्धिनी ।
कुमुद्वती कमलिनी कान्तिः कल्पितदायिनी ॥
काञ्चनाक्षी कामधेनुः कीर्त्तिकृत्क्लेशनाशिनी ।
क्रतुश्रेष्ठा क्रतुफला कर्मबन्धविभेदिनी ॥
कमलाक्षी क्लमहरा कृशानुतपनद्युतिः ।
करुणार्द्रा च कल्याणी कलिकल्मषनाशिनी ॥
कामरूपा क्रियाशक्तिः कमलोत्पलमालिनी ।
कूटस्था करुणा कान्ता कूर्मयाना १९० कलावती ॥
कमला कल्पलतिका काली कलुषवैरिणी ।
कमनीयजला कम्रा कपर्दिसु कपर्दगा ॥
कालकूटप्रशमनी कदम्बकुसुमप्रिया २०० ।
कालिन्दी केलिललिता कलकल्लोलमालिका ॥
क्रान्तलोकत्रया कण्डूः कण्डूतनयवत्सला ।
खड्गिनी खड्गधाराभा खगा खण्डेन्दुधारिणी२१० ॥

खे खेलगामिनी खस्था खण्डेन्दुतिलकप्रिया ।
खेचरी खेचरीवन्द्या ख्यातिः ख्यातिप्रदायिनी ॥
खण्डितप्रणताघौघा खलबुद्धिविनाशिनी ।
खातैनः कन्दसन्दोहा२२० खड्गखट्वाङ्गखेटिनी ॥
खरसन्तापशमनी खनिः पीयूषपाथसाम् ।
गङ्गा गन्धवती गौरी गन्धर्वनगरप्रिया ॥
गम्भीराङ्गी गुणमयी गतातङ्का२३० गतिप्रिया ।
गणनाथाम्बिका गीता गद्यपद्यपरिष्टुता ॥
गान्धारी गर्भशमनी गतिभ्रष्टगतिप्रदा ।
गोमती गुह्यविद्यागौ२४०र्गोप्त्री गगनगामिनी ॥
गोत्रप्रवर्धिनी गुण्या गुणातीता गुणाग्रणीः ।
गुहाम्बिका गिरिसुता गोविन्दाङ्घ्रिसमुद्भवा ॥
गुणनीयचरित्रा २५० च गायत्री गिरिशप्रिया ।
गूढरूपा गुणवती गुर्वी गौरववर्धिनी ॥
ग्रहपीडाहरा गुन्द्रा गरघ्नी गानवत्सला २६० ।
घर्महन्त्री घृतवती घृततुष्टिप्रदायिनी ॥
घण्टारवप्रियाघोराऽघौघविध्वंसकारिणी ।
घ्राणतुष्टिकरी घोषा घनानन्दा घनप्रिया ॥
घातुका २७० घूर्णितजला घृष्टपातकसन्ततिः ।
घटकोटिप्रपीतापा घटिताशेषमङ्गला ॥
घृणावती घृणनिधिर्घस्मरा घूकनादिनी ।
घुसृणा पिञ्जरतनुर्घर्घरा २८० घर्घरस्वना ॥
चन्द्रिका चन्द्रकान्ताम्बुश्चञ्चपादा चलद्युतिः ।
चिन्मयी चितिरूपा च चन्द्रायुतशतानना ॥
चाम्पेयलोचना चारु २९० रचार्वङ्गी चारुगामिनी ।
चार्या चारित्रनिलया चित्रकृच्चित्ररूपिणी ॥
चम्पूश्चन्दनशुच्यम्बुश्चर्चनीया चिरस्थिरा ३०० ।
चारुचम्पकमालाढ्या चमिताशेषदुष्कृता ॥
चिदाकाशवहा चिन्त्या चञ्चच्चामरवीजिता ।
चोरिताशेषवृजिना चरिताशेषमण्डला ॥
छेदिताऽखिलपापौघा छद्मघ्नी छलहारिणी ।
छन्नत्रिविष्टपतला छोटिताशेषबन्धना ॥

छुरितामृतधारौघा छिन्नैनाश्छन्दगामिनी ।
छत्रीकृतमरालौघा छटीकृतनिजामृता ॥

जाह्नवी ज्या ३२० जगन्माता जप्या जङ्घालवीचिका ।
जया जनार्दनप्रीता जुषणीया जगद्धिता ॥

जीवनं जीवनप्राणा जग ३३० ज्ज्येष्ठा जगन्मयी ।
जीवजीवातुलतिका जन्मिजन्मनिबर्हिणी ॥

जाड्यविध्वंसनकरी जगद्योनिर्जलाविला ।
जगदानन्दजननी जलजा जलजेक्षणा ॥

जनलोचनपीयूषा जटातटविहारिणी ।
जयन्ती जञ्जपूकघ्नी जनितज्ञानविग्रहा ॥

झल्लरीवाद्यकुशला झलज्झालजलावृता ।
झिण्टीशवन्द्या झाङ्कारकारिणी झर्झरावती ॥

टीकिताशेषपाताला टङ्किकैनोद्रिपाटने ।
टङ्कारनृत्यत्कल्लोला टीकनीयमहातटा ॥

डम्बरप्रवहा डीनराजहंसकुलाकुला ।
डमड्डमरुहस्ता च डामरोक्तमहाण्डका ॥

ढौकिताशेषनिर्वाणा ढक्कानादचलज्जला ३६० ।
ढुण्ढिविघ्नेशजननी ढणड्ढुण्ढितपातका ॥

तपणी तीर्थतीर्था च त्रिपथा त्रिदशेश्वरी ।
त्रिलोकगोप्त्री तोयेशी त्रैलोक्यपरिवन्दिता ॥

तापत्रितयसंहर्त्री ३७० तेजोबलविवर्धिनी ।
त्रिलक्षा तारणीतारा तारापतिकरार्चिता ॥

त्रैलोक्यपावनी पुण्या तुष्टिदा तुष्टिरूपिणी ।
तृष्णाछेत्री तीर्थमाता ३८० त्रिविक्रमपदोद्भवा ।
तपोमयी तपोरूपा तपस्तोमफलप्रदा ।
त्रैलोक्यपावनी तृप्तिस्तृप्तिकृत्तत्त्वरूपिणी ॥

त्रैलोक्यसुन्दरी तुर्या ३९० तुर्यातीतपदप्रदा ।
त्रैलोक्यलक्ष्मीस्त्रिपदी तथ्या तिमिरचन्द्रिमा ॥

तेजोगर्भा तपःसारा त्रिपुरारिशिरोगृहा ।
त्रयीस्वरूपिणी तन्वी ४०० तपनाङ्गजभीतिनुत् ॥
तरिस्तरणिजामित्रन्तर्पिताशेषपूर्वजा ।
तुलाविरहिता तीव्रपापतूलतनूनपात् ॥

दारिद्रचदमनी दक्षा दुष्प्रेक्षा दिव्यमण्डना ४१० ।
दीक्षावती दुरावाप्या द्राक्षामधुरवारिभृत् ॥
दर्शितानेककुतुका दुष्टदुर्जयदुःखहृत् ।
दैत्यहृद्दुरितघ्नी च दानवा रपदाब्जजा ॥
दन्दशूकविषघ्नी च दारिताघौघसंततिः ४२० ।
द्रुतादेवद्रुमच्छन्ना दुर्वाराघविघातिनी ॥
दमग्राह्या देवमाता देवलोकप्रदर्शिनी ।
देवदेवप्रियादेवी दिक्पालपददायिनी ॥
दीर्घायुः कारिणी ४३० दीर्घा दोग्ध्री दूषणवर्जिता ।
दुग्धाम्बुवाहिनी दोह्या दिव्या दिव्यगतिप्रदा ॥
द्युनदीदीनशरणं देहि देहनिवारिणी ४४० ।
द्राघीयसी दाघहन्त्री दितपातकसन्ततिः ॥
दूरदेशान्तरचरी दुर्गमा देववल्लभा ।
दुर्वृत्तघ्नी दुर्विगाह्या दयाधारा दयावती ४५० ॥
दुरासदादानशीला द्राविणी द्रुहिणस्तुता ।
दैत्यदानवसंशुद्धिकर्त्री दुर्बुद्धिहारिणी ॥
दानसारादयासाराद्यावाभूमिविगाहिनी ।
दृष्टादृष्टफलप्राप्ति४६०र्देवता वृन्दवन्दिता ॥
दीर्घवृता दीर्घदृष्टिर्दीप्ततोया दुरालभा ।
दण्डयित्री दण्डनीतिर्दुष्टदण्डधरार्चिता ॥
दुरोदरघ्नीदावार्चि ४७० र्द्रवद्द्रव्यैकशेवधि. ।
दीनसंतापशमनी दात्रीदवथुवैरिणी ॥
दरीविदारणपरा दान्तादान्तजनप्रिया ।
दारिदाद्रितटा दुर्गा ४८० दुर्गारण्यप्रचारिणी ॥
धर्मद्रवा धर्मधुरा धेनुर्धीरा धृतिर्ध्रुवा ।
धेनुदानफलस्पर्शा धर्मकामार्थमोक्षदा ॥
धर्मोर्मिवाहिनी४९० धुर्या धात्री धात्रीविभूषणम् ।
धर्मिणी धर्मशीला च धन्विकोटिकृतावना ॥
ध्यातृपापहरा ध्येया धावनीधूतकल्मषा ५०० ।
धर्मधारा धर्मसारा धनदाधनवर्धिनी ॥
धर्माधर्मगुणच्छेत्री धत्तूरकुसुमप्रिया ।
धर्मेशी धर्मशास्त्रज्ञा धनधान्यसमृद्धिकृत् ॥

धर्मलभ्या ५१० धर्मजला धर्मप्रसवधर्मिणी ।
ध्यानगम्यस्वरूपा च धरणी धातृपूजिता ॥
धूर्धूर्जटिजटासंस्था धन्या धीर्धारणावती ५२० ।
नन्दा निर्वाणजननी नन्दिनी नुन्नपातका ॥
निषिद्धविघ्ननिचया निजानन्दप्रकाशिनी ।
नभोऽङ्गणचरी नूतिर्नम्या नारायणी ५३० नुता ॥
निर्मलानिर्मलाख्याना नाशिनी तापसम्पदाम् ।
नियतानित्यसुखदा नानाश्चर्यमहानिधिः ॥
नदीनदसरोमाता नायिका ५४० नाकदीर्घिका ।
नष्टोद्धरणधीरा च नन्दानन्ददायिनी ॥
निर्णिक्ताशेषभुवना निःसङ्गा निरुपद्रवा ।
निरालम्बा निष्प्रपञ्चा निर्णाशितमहामला ५५० ॥
निर्मलज्ञानजननी निःशेषप्राणितापहृत् ।
नित्योत्सवा नित्यतृप्ता नमस्कार्या निरञ्जना ॥
निष्ठावती निरातङ्का निर्लेपा निश्चलात्मिका५६० ।
निरवद्या निरीहा च नीललोहितमूर्धगा ॥
नन्दिभृङ्गिगणस्तुत्या नागानन्दानगात्मजा ।
नित्यप्रत्यूहा नाकनदी निरयार्णवदीर्घनौः ॥
पुण्यप्रदा पुण्यगर्भा पुण्यापुण्यतरङ्गिणी ।
पृथुः पृथुफलापूर्णा प्रणतार्तिप्रभञ्जिनी ॥
प्राणदा प्राणिजननी ५८० प्राणे प्राणरूपिणी ।
पद्मालया पराशक्तिः पुरुजित्परमप्रिया ।
परापरफलप्राप्तिः पावनी च पयस्विनी ।
परानन्दा ५९० प्रकृष्टार्था प्रतिष्ठापालनी परा ॥
पुराणपठिता प्रीता प्रणवाक्षररूपिणी ।
पार्वती प्रेमसम्पन्ना पशुपाशविमोचिनी ६०० ॥
पानीयरूपनिर्वाणा परित्राणपरायणा ।
पापेन्धनदवज्वाला पापारिः पापनामनुत् ॥
परमैश्वर्यजननी ६१० प्रज्ञा प्रज्ञा परापरा ।
प्रत्यक्षलक्ष्मीः पद्माक्षी परव्योमामृतस्रवा ।
प्रसन्नरूपा प्रणिधिः पूता प्रत्यक्षदेवता ६२० ।
पिनाकिपरमप्रीता परमेष्ठिकमण्डलुः ॥

पद्मनाभपदार्घ्येण प्रसूता पद्ममालिनी।
परर्धिदा पुष्टिकरी पथ्या पूर्तिः प्रभावती॥

पुनाना ६३० पीतगर्भघ्नी पापपर्वतनाशिनी।
फलिनी फलहस्ता च फुल्लाम्बुजविलोचना॥

फालितैनो महाक्षेत्रा फणिलोकविभूषणम्।
फेनच्छलप्रणुन्नैनाः फुल्लकैरवगन्धिनी॥

फेनिलाच्छाम्बुधाराभा ६४० फुडुच्चाटितपातका।
फाणितस्वादुसलिला फाण्टपथ्यजलाविला॥

विश्वमाता च विश्वेशी विश्वा विश्वेश्वरप्रिया।
ब्रह्मण्या ब्रह्मकृद् ब्राह्मी६५०ब्रह्मिष्ठा विमलोदका॥

विभावरी च विरजा विक्रान्तानेकविष्टपा।
विश्वमित्रं विष्णुपदी वैष्णवी वैष्णवप्रिया॥

विरूपाक्षप्रियकरी ६६० विभूतिर्विश्वतोमुखी।
विपाशा वैबुधी वेद्या वेदाक्षररसस्रवा॥
विद्या वेगवती वन्द्या बृंहणी ६७० ब्रह्मवादिनी।
वरदा विप्रकृष्टा च वरिष्ठा च विशोधिनी॥

विद्याधरी विशोका च वयोवृन्दनिषेविता।
बहूदका बलवती ६८० व्योमस्था विबुधप्रिया॥

वाणी वेदवती वित्त ब्रह्मविद्यातरङ्गिणी।
ब्रह्माण्डकोटिव्याप्ताम्बुर्ब्रह्महत्यापहारिणी॥

ब्रह्मेशविष्णुरूपा च बुद्धि ६९० र्विभववर्धिनी।
विलासिसुखदा वैश्या व्यापिनी च वृषारणिः॥
वृषाङ्कमौलिनिलया विपन्नार्तिप्रभञ्जिनी।
विनीता विनता ब्रध्नतनया ७०० विनयान्विता॥

विपञ्ची वाद्यकुशला वेणुश्रुतिविचक्षणा।
वर्चस्करी बलकरी बलोन्मूलितकल्मषा॥

विपाप्मा विगतातङ्का विकल्पपरिवर्जिता ७१०।
वृष्टिकर्त्री वृष्टिजला विधिर्विच्छिन्नबन्धना॥

व्रतरूपा वित्तरूपा बहुविघ्नविनाशकृत्।
वसुधारा वसुमती विचित्राङ्गी ७२० विभावसुः॥
विजया विश्वबीजञ्च वामदेवी वरप्रदा।
वृषाश्रिता विषघ्नी च विज्ञानोर्म्यंशुमालिनी॥

भव्या भोगवती ७३० भद्रा भवानी भूतभाविनी ।
भूतदात्री भयहरा भक्तदारिद्र्यघातिनी ।।
भुक्तिमुक्तिप्रदा भेशी भक्तस्वर्गापवर्गदा ।
भागीरथी ७४० भानुमती भाग्यं भोगवती भृतिः ।।
भवप्रिया भवद्वेषी भूतिदा भूतिभूषणा ।
भाललोचनभावज्ञा भूतभव्यभवत्प्रभुः ७५० ।।
भ्रान्तिज्ञानप्रशमनी भिन्नब्रह्माण्डमण्डपा ।
भूरिदा भक्तिसुलभा भाग्यवद्दृष्टिगोचरी ।।
भञ्जितोपप्लवकुला भक्ष्यभोज्यसुखप्रदा ।
भिक्षुणीया भिक्षुमाता भावा७६०भावस्वरूपिणी ।।
मन्दाकिनी महामन्दा माता मुक्तितरङ्गिणी ।
महोदया मधुमती महापुण्या मुदाकरी ।।
मुनिस्तुता ७७० मोहहन्त्री महातीर्था मधुस्रवा ।
माधवी मानिनी मान्या मनोरथपथातिगा ।।
मोक्षदा मतिदा मुख्या७८० महाभाग्यजनाश्रिता ।
महावेगवती मेध्या महामहिमभूषणा ।।
महाप्रभावा महती मीनचञ्चललोचना ।
महाकारुण्यसम्पूर्णा मर्हद्धि ७९०श्च महोत्पला ।।
मूर्तिमन्मुक्तिरमणी मणिमाणिक्यभूषणा ।
मुक्ताकलापनेपथ्या मनोनयननन्दिनी ।।
महापुण्योदयप्राप्या मायातिमिरचन्द्रिका ।
महाविद्या महामाया महामेधा महौषधम् ।।
मालाधरी महोपाया ८१० महोरगविभूषणा ।
महामोहप्रशमनी महामङ्गलमङ्गलम् ।।
मार्तण्डमण्डलचरी महालक्ष्मीर्मदोज्झिता ।
यशस्विनी यशोदा च योग्या युक्तात्मसेविता८२० ।।
योगसिद्धिप्रदा याज्या यज्ञेशपरिपूरिता ।
यज्ञेशी यज्ञफलदा यजनीया यशस्करी ।।
यमिसेव्या योगयोनिर्योगिनी ८३० युक्तबुद्धिदा ।
योगज्ञानप्रदा युक्ता यमाद्यष्टाङ्गयोगयुक् ।।
यन्त्रिताघौघसञ्चारा यमलोकनिवारिणी ।
यातायातप्रशमनी यातनानामकृन्तनी ।।

यामिनीशहिमाच्छोदा युगधर्मविवर्जिता ८४० ।
रेवतीरतिकृद्रम्यारत्नगर्भा रमारतिः ॥
रत्नाकरप्रेमपात्रं रसज्ञा रसरूपिणी ।
रत्नप्रासादगर्भा च ८५० रमणीयतरङ्गिणी ॥
रत्नार्चीरुद्ररमणी रागद्वेषविनाशिनी ।
रमा रामा रम्यरूपा रोगिजीवातुरूपिणी ॥
रुचिकृद्रोचनी ८६० रम्या रुचिरा रोगहारिणी ।
राजहंसा रत्नवती राजत्कल्लोलराजिका ॥
रामणीयकरेखा च रुजारी रोगशोषिणी ।
राका८७० रङ्कार्तिशमनी रम्या रोलम्बराविणी ॥
रागिणी रञ्जितशिवारूपलावण्यशेवधिः ।
लोकप्रसूर्लोकवन्द्या लोलत्कल्लोलमालिनी ॥
लीलावस्या८८० लोकभूमिर्लोकलोचनचन्द्रिका ।
लेखस्रवन्ती लटभा लघुवेगालघुत्वहृत् ॥
लास्यत्तरङ्गहस्ता च ललिता लयभङ्गिगा ।
लोकबन्धु८९० र्लोकधात्री लोकोत्तरगुणोर्जिता ॥
लोकत्रयहिता लोका लक्ष्मीर्लक्षणलक्षिता ।
लीलालक्षितनिर्वाणा लावण्याऽमृतवर्षिणी ॥
वैश्वानरी९०० वासवेड्या वन्ध्यत्वपरिहारिणी ।
वासुदेवाङ्घ्रिरेणुघ्नी वज्रिवज्रनिवारिणी ॥
शुभावती शुभफला शान्तिः शान्तनुवल्लभा ।
शूलिनी शैशववयाः ९१० शीतलाऽमृतवाहिनी ॥
शोभावती शीलवती शोषिताशेषकिल्बिषा ।
शरण्या शिवदा शिष्टा शरजन्मप्रसूः शिवा ॥
शक्तिः ९२० शशाङ्कविमला शमनस्वसृसम्मता ।
शमाशमनमार्गघ्नी शितिकण्ठमहाप्रिया ॥
शुचिः शुचिकरी शेषा शेषशायिपदोद्भवा ।
श्रीनिवासश्रुतिः९३०श्रद्धा श्रीमती श्रीः शुभव्रता ॥
शुद्धविद्या शुभावर्ता श्रुतानन्दा श्रुतिस्मृतिः ।
शिवेतरघ्नी शबरी ९४० शाम्बरीरूपधारिणी ॥
श्मशानशोधनी शान्ता शश्वच्छतधृतिष्टुता ।
शालिनी शालिशोभाढ्या शिखिवाहनगर्भभृत् ॥

शंसनीयचरित्रा च शातिताशेषपातका ९५० ।
षड्गुणैश्वर्यसम्पन्ना षडङ्गश्रुतिरूपिणी ॥

षण्ढताहारिसलिला ष्ट्यायन्नदनदीशता ।
सरिद्वरा च सुरसा सुप्रभा सुरदीर्घिका ॥

स्वः सिन्धुः सर्वदुःखघ्नी९६०सर्वव्याधिमहौषधम् ।
सेव्या सिद्धिः सतो सूक्तिः स्कन्दसूश्च सरस्वती ॥

सम्पत्तरङ्गिणी स्तुत्या स्थाणुमौलिकृतालया९७०।
स्थैर्यदा सुभगा सौख्या स्त्रीषु सौभाग्यदायिनी ॥

स्वर्गनिःश्रेणिका सूक्ष्मा स्वधा स्वाहा सुधाजला ।
समुद्ररूपिणी ९८० स्वर्या सर्वपातकवैरिणी ॥

स्मृताघहारिणी सीता संसाराब्धितरण्डिका ।
सौभाग्यसुन्दरी सन्ध्या सर्वसारसमन्विता ॥

हरप्रियाहृषीकेशी ९९० हंसरूपा हिरण्मयी ।
हृताघसङ्घाहितकृद्धेला हेलाघगर्वहृत् ॥

क्षेमदा क्षालिताघौघा क्षुद्रविद्राविणी क्षमा१०००।

× × ×

इति नामसहस्रं हि गङ्गायाः कलशोद्भव ।
कीर्तयित्वा नरः सम्यग्गङ्गास्नानफलं लभेत् ॥

सर्वपापप्रशमनं सर्वविघ्नविनाशनम् ।
सर्वस्तोत्रजपाच्छ्रेष्ठं सर्वपावनपावनम् ॥

श्रद्धयाऽभीष्टफलदञ्चतुर्वर्गसमृद्धिकृत् ।
सकृज्जपादवाप्नोति ह्येकक्रतुफलं मुने ! ॥

सर्वतीर्थेषु यः स्नातः सर्वयज्ञेषु दीक्षितः ।
तस्य यत्फलमुद्दिष्टं त्रिकालपठनाच्च तत् ॥

सर्वव्रतेषु यत्पुण्यं सम्यक्चीर्णेषुवाडव ।
तत्फलं समवाप्नोति त्रिसन्ध्यन्नियतः पठन् ॥

स्नानकाले पठेद्यस्तु यत्र कुत्र जलाशये ।
तत्र सन्निहिता नूनं गङ्गा त्रिपथगा मुने ! ॥

श्रेयोऽर्थी लभते श्रेयो धनार्थी लभते धनम् ।
कामी कामानवाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ॥
वर्षं त्रिकालपठनाच्छ्रद्धया शुचिमानसः ।
ऋतुकालाभिगमनादपुत्रः पुत्रवान्भवेत् ॥

नाकालमरणं तस्य नाग्निचोराहिसाध्वसम् ।
नाम्नां सहस्रं गङ्गाया यो जपेच्छ्रद्धया मुने ॥
गङ्गानामसहस्रन्तु जप्त्वा ग्रामान्तरं व्रजेत् ।
कार्यसिद्धिमवाप्नोति निर्विघ्नो गेहमाविशेत् ।
तिथिवारर्क्षयोगानां न दोषः प्रभवेत्तदा ।
यदा जप्त्वा व्रजेदेतत्स्तोत्रं ग्रामान्तरन्नरः ॥
आयुरारोग्यजननं सर्वोपद्रवनाशनम् ।
सर्वसिद्धिकरं पुंसां गङ्गानामसहस्रकम् ॥
जन्मान्तरसहस्रेषु यत्पापं सम्यगर्जितम् ।
गङ्गानामसहस्रस्य जपनात्तत्क्षयं व्रजेत् ॥
ब्रह्मघ्नो मद्यपः स्वर्णस्तेयी च गुरुतल्पगः ।
तत्संयोगी भ्रूणहन्ता मातृहा पितृहा मुने ! ॥
विश्वासघाती गरदः कृतघ्नो मित्रघातकः ।
अग्निदो गोवधकरो गुरुद्रव्यापहारक. ॥
महापातकयुक्तोऽपि संयुक्तोऽप्युपपातकैः ।
मुच्यते श्रद्धया जप्त्वा गंगानामसहस्रकम् ॥
आधिव्याधिपरिक्षिप्तो घोरतापपरिप्लुतः ।
मुच्यते सर्वदुःखेभ्यः स्तवस्यास्यानुकीर्त्तनात् ॥
संवत्सरेण युक्तात्मा पठन्भक्तिपरायणः ।
अभीप्सितां लभेत्सिद्धिं सर्वैः पापैः प्रमुच्यते ॥
संशयाविष्टचित्तस्य धर्मविद्वेषिणोऽपि च ।
दाम्भिकस्यापि हिंस्रस्य चेतो धर्मपरम्भवेत् ॥
वर्णाश्रमपथीनस्तु कामक्रोधविवर्जितः ।
यत्फलं लभते ज्ञानी तदाप्नोत्यस्य कीर्त्तनात् ॥
गायत्र्ययुतजप्येन यत्फलं समुपार्जितम् ।
सकृत्पठनतः सम्यक् तदशेषमवाप्नुयात् ॥
गां दत्वा वेदविदुषे यत्फलं लभते कृती ।
तत्पुण्यं सम्यगाख्यातं स्तवराजसकृज्जपात् ॥
गुरुशुश्रूषणं कुर्वन्यावज्जीवं नरोत्तमः ।
यत्पुण्यमर्जयेत्तद्भाग्वर्षं त्रिषवणञ्जपन् ॥
वेदपारायणात्पुण्यं यदत्र परिपठ्यते ।
तत्षण्मासेन लभते त्रिसन्ध्यं परिकीर्तनात् ॥

गङ्गायाः स्तवराजस्य प्रत्यहं परिशीलनात् ।
शिवभक्तिमवाप्नोति विष्णुभक्तोऽथवा भवेत् ॥

यः कीर्तयेदनुदिनं गङ्गानामसहस्रकम् ।
तत्समीपे सहचरी गङ्गादेवी सदा भवेत् ॥

सर्वत्र पूज्यो भवति सर्वत्र विजयी भवेत् ।
सर्वत्र सुखमाप्नोति जाह्नवीस्तोत्रपाठतः ॥

सदाचारी स विज्ञेयः स शुचिस्तु सदैव हि ।
कृतसर्वसुरार्चः स कीर्तयेद्य इमां स्तुतिम् ॥

तस्मिंस्तृप्ते भवेत्तृप्ता जाह्नवी नात्र संशयः ।
तस्मात्सर्वप्रयत्नेन गङ्गाभक्तं समर्चयेत् ॥
स्तवराजमिमं गाङ्गं शृणुयाद्यश्च वै पठेत् ।
श्रावयेदथ तद्भक्तान्दम्भलोभविवर्जितः ॥

मुच्यते त्रिविधैः पापैर्मनोवाक्कायसम्भवैः ।
क्षणान्निष्पापतामेति पितृणाञ्च प्रियो भवेत् ॥

सर्वदेवप्रियश्चापि सर्वर्षिगणसम्मतः ।
अन्ते विमानमारुह्य दिव्यस्त्रीशतसंवृतः ॥

दिव्याभरणसम्पन्नो दिव्यभोगसमन्वितः ।
नन्दनादिवने स्वैरं देववत्स प्रमोदते ॥

भुज्यमानेषु विप्रेषु श्राद्धकाले विशेषतः ।
जपन्निदं महास्तोत्रं पितॄणां तृप्तिकारकम् ॥
यावन्ति तत्र सिक्थानि यावन्तोऽम्बुकणाः स्थिताः ।
तावन्त्येव हि वर्षाणि मोदन्ते स्वः पितामहाः ॥

यथा प्रीणन्ति पितरो गङ्गायां पिण्डदानतः ।
तथैव तृप्नुयुः श्राद्धे स्तवस्यास्यानुसंश्रवात् ॥
एतत्स्तोत्रं गृहे यस्य लिखितं परिपूज्यते ।
तत्र पापभयं नास्ति शुचितद्भवनं सदा ॥

अगस्ते किम्बहूक्तेन शृणु मे निश्चितं वचः ।
संशयो नात्र कर्त्तव्यः संदेग्धरि फलन्न हि ॥

यावन्ति मर्त्ये स्तोत्राणि मन्त्रजालान्यनेकशः ।
तावन्ति स्तवराजस्य गाङ्गे यस्य समानि न ॥

यावज्जन्म जपेद्यस्तु नाम्नामेतत्सहस्रकम् ।
स कीकटेष्वपि मृतो न पुनर्गर्भमाविशेत् ॥

नित्यं नियमानेतद्यो जपेत्स्तोत्रमुत्तमम् ।
अन्यत्रापि विपन्नः स गङ्गातीरे मृतो भवेत् ॥
एतत्स्तोत्रवरं रम्यं पुरा प्रोक्तं पिनाकिना ।
विष्णवे निजभक्ताय मुक्तिबीजाक्षरास्पदम् ॥
गङ्गास्नानप्रतिनिधिः स्तोत्रमेतन्मयेरितम् ।
सिस्नासुर्जाह्नवीं तस्मादेतत्स्तोत्रं जपेत्सुधीः ॥
( स्कन्दमहापु० काशीख० २९।१७-२१ )

## (छ) नर्मदास्तुतिः

### १. द्विजैः कृता नर्मदास्तुतिः

(क)—नमोऽस्तु ते पुण्यजले नमो मकरगामिनी ।
नमस्ते पापमोचिन्यै नमो देवि वरानने ॥
नमोऽस्तु ते पुण्यजलाश्रये शुभे
विशुद्धसत्त्वे सुरसिद्धसेविते ।
नमोऽस्तु ते तीर्थगणैर्निषेवते
नमोऽस्तु रुद्राङ्गसमुद्भवे वरे ॥
नमोऽस्तु ते देवि समुद्रगामिनि
नमोऽस्तु ते देवि वरप्रदे शिवे ।
नमोऽस्तु लोकद्वयसौख्यदायिनि
ह्यनेकभूतौघसमाश्रितेऽनघे ॥
सरिद्वरे पापहरे विचित्रिते
गन्धर्वयक्षोरगसेविताङ्गे ।
सनातनि प्राणिगणानुकम्पिनि
मोक्षप्रदे देवि विधेहि शं नः ॥
महागजौघैर्महिषैर्वराहैः
ससेविते देवि महोर्मिमाले ।
नताः स्म सर्वे वरदे सुखप्रदे
विमोचयास्मान्पशुपाशबन्धात् ।
पापैरनेकैरशुभैर्विबद्धा
भ्रमन्ति तावन्नरकेषु मर्त्याः ।
महानिलोद्भूततरङ्गभूतं
यावत्तवाम्भो न हि संश्रयन्ति ॥

म्लेच्छाः पुलिन्दास्त्वथ यातुधानाः
पिबन्ति येऽम्भस्तव देवि पुण्यम् ।
युक्ता भवन्तीह भयात्तु घोरा-
न्निःसंशयं तेऽपि किमत्र चित्रम् ॥

सरांसि नद्यः क्षयमभ्युपेता
घोरे युगेऽस्मिन्हि कलौ प्रदूषिते ।
त्वं भ्राजसे देवि जलौघपूर्णा
दिवीव नक्षत्रपथे च गङ्गा ॥

तव प्रसादाद्वरदे वरिष्ठे
कालं यथेमं परिपालयित्वा ।
यामोऽथ रुद्रं तव सुप्रसादा-
द्वयं तथा त्वं कुरु वै प्रसादम् ॥

गतिस्त्वमम्बे पितेव पुत्रां-
स्त्वं पाहि नो यावदिमं युगान्तम् ।
काले त्वनावृष्टिहतं सुघोरं
यावत्तरामस्तव सुप्रसादात् ॥

× × ×

पठन्ति ये स्तोत्रमिदं द्विजेन्द्राः
शृण्वन्ति ये चापि नराः प्रशान्ताः ।
ते यान्ति रुद्रं वृषसंयुतेन
यानेन दिव्याम्बरभूषिताश्च ॥

ये स्तोत्रमेतत्सततं पठन्ति
स्नात्वा तु तोये खलु नर्मदायाः ।
अन्ते हि तेषां सरिदुत्तमेयं
गतिं विशुद्धामचिराद्ददाति ॥

प्रातः समुत्थाय तथा शयानो
यः कीर्त्तयेतानुदिनं स्तवं च ।
स मुक्तपापः सुविशुद्धदेहः
समाश्रयं याति महेश्वरस्य ॥

( स्क० महापु० रेवाखण्ड–१२।२-१८ )

(ख)—नमोऽस्तु ते सिद्धगणैर्निषेविते
नमोऽस्तु ते सर्वपवित्रमङ्गले ।
नमोऽस्तु ते विप्रसहस्रसेविते
नमोऽस्तु रुद्राङ्गसमुद्भवे वरे ॥
नमोऽस्तु ते सर्वपवित्रपावने
नमोऽस्तु ते देवि वरप्रदे शिवे ।
नमामि ते शीतजले सुखप्रदे
सरिद्वरे पापहरे विचित्रिते ॥
अनेकभूतौघसुसेविताङ्गे
गन्धर्वयक्षोरगपाविताङ्गे ।
महागजौघैर्महिषैर्वराहै-
रापीयसे तोयमहोर्मिमाले ॥
नमामि ते सर्ववरे सुखप्रदे
विमोचयास्मानघपाशबद्धान् ॥
भ्रमन्ति तावन्नरकेषु मर्त्या
यावत्तवाम्भो न हि संश्रयन्ति ।
स्पृष्टं करैश्चन्द्रमसो रवेश्चे-
द्देवि दद्यात्परमं परमं पदं तु ॥
अनेकसंसारभयार्दितानां
पापैरनेकैरभिवेष्टितानाम् ।
गतिस्त्वमम्भोजसमानवक्त्रे
द्वन्द्वैरनेकैरभिसंवृतानाम् ॥
नद्यश्च पूता विमला भवन्ति
त्वां देवि सम्प्राप्य न संशयोऽत्र ।
दुःखातुराणामभयं ददासि
शिष्टैरनेकैरभिपूजिताऽसि ॥
विण्मूत्रदेहाश्च निमग्नदेहा
भ्रमन्ति तावन्नरकेषु मर्त्याः ।
महाबलध्वस्ततरङ्गभङ्ग
जलं न यावत्तव संस्पृशन्ति ॥
म्लेच्छाः पुलिन्दास्त्वथ यातुधानाः
पिबन्ति येऽम्भस्तव देवि पुण्यम् ।
तेऽपि प्रमुच्यन्ति भयाच्च घोरा-
त्किमत्र विप्रा भवपाशभीताः ॥

सरांसि नद्यः क्षयमभ्युपेता
घोरे युगेऽस्मिन्कलिनावसृष्टे ।
त्वं भ्राजसे देवि जलौघपूर्णा
दिवीव नक्षत्रपथे च गङ्गा ॥

तव प्रसादाद्वरदे विशिष्टे
कालं यथेमं परिपालयित्वा ।
यास्याम मोक्षं तव सुप्रसादा-
द्वयं यथा त्वं कुरु नः प्रसादम् ॥

त्वामाश्रिता ये शरणं गताश्च
गतिस्त्वमम्बेव पितेव पुत्रान् ।
त्वत्पालिता यावदिमं सुघोरं
कालं त्वनावृष्टिहतं क्षिपामः ॥

× × ×

एवं स्तुता तदा देवी नर्मदा सरितां वरा ।
प्रत्यक्षा सा परामूर्ध्निंर्ब्राह्मणानां युधिष्ठिर ॥

पठन्ति ये स्तोत्रमिदं नरेन्द्र
शृण्वन्ति भक्त्या परया प्रशान्ताः ।
ते यान्ति रुद्रं वृषसंयुतेन
यानेन दिव्याम्बरभूषिताङ्गाः ॥

ये स्तोत्रमेतत्सततं जपन्ति
स्नात्वा च तोयेन तु नर्मदायाः ।
तेभ्योऽन्तकाले सरिदुत्तमेयं
गतिं विशुद्धामचिराद्ददाति ॥

प्रातः समुत्थाय तथा शयानो
यः कीर्तयेतानुदिनं स्तवेन्द्रम् ।
देहक्षयं स्वे सलिले ददाति
समाश्रयं तस्य महानुभाव ॥

पापैर्विमुक्ता दिवि मोदमानाः
सम्भोगिनश्चैव तु नान्यथा च ॥

प्रसन्ना नर्मदा देवी स्तोत्रेणानेन भारत ।
जलेनाप्यायितान्विप्रान्दक्षिणापथवाहिनी ॥

अमृतत्वं तु वो दद्मि योगिभिर्यन्न गम्यते ।
दुर्लभं यत्सुरैः सर्वैर्मत्प्रसादाल्लभिष्यथ ।
इति ते ब्राह्मणा राजल्लँब्धा वरमनुत्तमम् ।
गमिष्यन्तः प्रीतचित्ता ददृशुश्चित्रमद्भुतम् ॥
( स्क० महापु० रेवाख० ६०।२५-४४ )

## २. व्यासकृता नर्मदास्तुतिः

जय भगवति देवि नमो वरदे
जय पापविनाशिनि बहुफलदे ।
जय शुम्भनिशुम्भकपालधरे
प्रणमामि तु देव नरार्त्ति हरे ॥
जय चन्द्रदिवाकरनेत्रधरे
जय पावकभूषितवक्त्रवरे ।
जय भैरवदेहनिलीनपरे
जय अन्धकरक्तविशोषकरे ॥
जय महिषविमर्दिनि शूलकरे
जय लोकसमस्तकपापहरे ।
जय देवि पितामहरामनते
जय भास्करशक्रशिरोऽवनते ॥
जय षण्मुखसायुधईशनुते
जय सागरगामिनि शम्भुनुते ।
जय दुःखदरिद्रविनाशकरे
जय पुत्रकलत्रविवृद्धिकरे ॥
जय देवि समस्तशरीरधरे
जय नाकविदर्शिनि दुःखहरे ।
जय व्याधिविनाशिनि मोक्षकरे
जय वाञ्छितदायिनी सिद्धवरे ॥

एतद् व्यासकृतं स्तोत्रं यः पठेच्छिवसन्निधौ ।
गृहे वा शुद्धभावेन कामक्रोधविवर्जितः ॥
तस्य व्यासो भवेत्प्रीतः प्रीतश्च वृषवाहनः ।
प्रीता स्यान्नर्मदादेवी सर्वपापक्षयङ्करी ॥
न ते यान्ति समालोकं यैः स्तुता भुवि नर्मदा ।
पितामहोऽपि मुह्येत देवि त्वद्गुणकीर्त्तनात् ॥

वाक्पतिर्नैव ते वक्तुं स्वरूपं वेद नर्मदे ।
कथं गुणानहं देवि त्वदीयाञ्ज्ञातुमुत्सहे ॥

इति ज्ञात्वा शुचिं भावं वाङ्मनः कायकर्मभिः ।
प्रसन्ना नर्मदा देवी ततो वचनमब्रवीत् ॥

सत्यवादेन तुष्टाऽहं भो भो व्यास महामुने ।
यदीच्छसि वरं किञ्चित्तं ते सर्वं ददाम्यहम् ॥

( स्क० महापु० रेवाख० ६७:१०३-११३ )

# (ज) श्रीरामस्तुतयः

## १. समुद्रकृता श्रीरामस्तुतिः

नमामि ते राघवपादपङ्कजं सीतापते सौख्यदपादसेविनाम् ।
नमामि ते गौतमदारमोक्षदं श्रीपादरेणुं सुरवृन्दसेव्यम् ॥

सुरप्रियादेहविदारिणे नमो नमोऽस्तु ते कौशिकयागरक्षिणे ।
नमो महादेवशरासभेदिने नमो नमो राक्षससङ्घनाशिने ॥

राम राम नमस्यामि भक्तानामिष्टदायिनम् ।
अवतीर्णं रघुकुले देवकार्यचिकीर्षया ॥

नारायणमनाद्यन्तं मोक्षदं शिवमच्युतम् ।
राम राम महाबाहो रक्ष मां शरणागतम् ॥

कोपं संहर राजेन्द्र क्षमस्व करुणालय ।
भूमिर्वातोवियच्चापो ज्योतींषि च रघूद्वह ॥

न वंशजं गुणं हातुमुत्सहेऽहं कथञ्चन ।
तत्करिष्ये च साहाय्यं सेनायास्तरणे तव ॥

( स्क० महापु० ब्रह्मख० १।२।७५-८२ )

## २. सुतीक्ष्णकृता श्रीरामस्तुतिः

नमस्ते जानकीनाथ नमस्ते हनुमत्प्रिय ॥

नमस्ते कौशिकमुनेर्यागरक्षणदीक्षित ।
नमस्ते कौशलेशाय विश्वामित्रप्रियाय च ॥

नमस्ते हरकोदण्डभञ्जकाऽमरसेवित ।
मारीचान्तक राजेन्द्र ताटकाप्रणनाशन ॥

कबन्धारे हरे तुभ्यं नमो दशरथात्मज ।
जामदग्न्यजिते तुभ्यं खरविध्वंसिने नमः ॥

नमः सुग्रीवनाथाय नमो बालिहराय ते ।
विभीषणभयक्लेशहारिणे मलहारिणे ॥

अहल्यादुःखसंहर्त्रे नमस्ते भरताग्रज ।
अम्भोधिगर्वसंहर्त्रे तस्मिन्सेतुकृते नमः ॥

तारकब्रह्मणे तुभ्यं लक्ष्मणाग्रज ते नमः ।
रक्षः संहारिणे तुभ्यं नमो रावणमर्द्दिने ॥

कोदण्डधारिणे तुभ्यं सर्वरक्षाविधायिने ।
इति स्तुवन्मुनिः सोऽयं सुतीक्ष्णो राममन्वहम् ॥

निनाय कालमनिशं रामचन्द्रनिषण्णधीः ।
एवमभ्यसतस्तस्य राममन्त्रं षडक्षरम् ॥

स्तुवतो रामचन्द्रञ्च स्तोत्रेणानेन सुव्रताः ।
तीर्थे च रघुनाथस्य कुर्वतः स्नानमन्वहम् ॥

अभवन्निश्चला भक्ती रामचन्द्रेऽति निर्मला ।
अभूदद्वैतविज्ञानं प्रत्यगात्मैकलक्षणम् ॥

अनधीतत्रयीज्ञानं तथैवाऽश्रुतवेदनम् ।
परकायप्रवेशे च सामर्थ्यमभवद्द्विजाः ॥

आकाशगमने शक्ती कलावैदग्ध्यमेव च ।
अश्रुतानाञ्च शास्त्राणामभिज्ञानं विना गुरुम् ॥

गमनं सर्वलोकेषु प्रतिघातविवर्जितम् ।
अतीन्द्रियार्थदृष्टत्वं देवैः सम्भाषणं तथा ॥

चतुर्दशेषु लोकेषु निर्यत्तगमनन्तथा ।
एतान्यन्यानि सर्वाणि योगिलभ्यानि सत्तमाः ॥

सुतीक्ष्णस्याभवन्विप्रा रामतीर्थनिषेवणात् ।

( स्क० महापु० ब्रह्मखं० ३।१८।१०-२६ )

## ३. मुनिभिः कृता श्रीरामस्तुतिः

नमस्ते रामचन्द्राय लोकानुग्रहकारिणे ।
अरावणजगत्कर्तुमवतीर्णाय भूतले ॥

ताटिकादेहसंहर्त्रे गाधिजाध्वररक्षिणे ।
नमस्ते जितमारीच ! सुबाहुप्राणधारिणे ॥

अहल्यामुक्तिसंदायिपादपङ्कजरेणवे ।
नमस्ते हरकोदण्डलीलाभञ्जनकारिणे ॥

नमस्ते मैथिलीपाणिग्रहणोत्सवशालिने ।
नमस्ते रेणुकापुत्रपराजयविधायिने ॥

सह लक्ष्मणसीताभ्यां कैकेय्यास्तु वरद्वयात् ।
सत्यं पितृवचः कर्तुं नमो वनमुपेयुषे ॥

भरतप्रार्थनादत्तपादुकायुगलाय ते ।
नमस्ते शरभङ्गस्य स्वर्गप्राप्त्यैकहेतवे ॥

नमो विराधसंहर्त्रे शबरीपूजिताङ्घ्रये ।
प्राप्तसुग्रीवसख्याय कृतबालिवधाय ते ॥

नमः कृतवते सेतुं समुद्रे वरुणालये ।
सर्वराक्षससंहर्त्रे रावणप्राणहारिणे ॥

संसाराम्बुधिसंतारपोतपादाम्बुजायते ।
नमो भक्तार्तिसंहर्त्रे सच्चिदानन्दरूपिणे ॥

नमस्ते रामभद्राय जगतामृद्धिहेतवे ।
रामादिपुण्यनामानि जपतां पापहारिणे ॥

नमस्ते सर्वलोकानां सृष्टिस्थित्यन्तकारिणे ।
नमस्ते करुणामूर्त्ते भक्तरक्षणदीक्षित ॥

ससीताय नमस्तुभ्यं विभीषणसुखप्रद ।
लङ्केश्वरवधाद्राम ! पालितं हि जगत्त्वया ॥

रक्ष रक्ष जगन्नाथ ! पाह्यस्माञ्जानकीपते ।
स्तुत्वैवं मुनयः सर्वे तूष्णीं तस्थुर्द्विजोत्तमाः ॥

× × ×

य इमं रामचन्द्रस्य स्तोत्रं मुनिभिरीरितम् ।
त्रिसन्ध्यं पठते भक्त्या भुक्तिं मुक्तिं च विन्दति ॥
प्रयाणकाले पठतो न भीतिरुपजायते ।
एतत्स्तोत्रस्य पठनाद्भूतवेतालका इह ॥
नश्यन्ति रोगा नश्यन्ति नश्यते पापसञ्चयः ।
पुत्रकामो लभेत्पुत्रं कन्या विन्दति सत्पतिम् ॥
मोक्षकामो लभेन्मोक्षं धनकामो धनं लभेत् ।
सर्वान्कामानवाप्नोति पठन्भक्त्या त्विमं स्तवम् ॥

( स्क० महापु० ब्रह्म० ३।४४।६३-८१ )

## ४. हनुमत्कृता श्रीरामस्तुतिः

नमो रामाय हरये विष्णवे प्रभविष्णवे ।
आदिदेवाय देवाय पुराणाय गदाभृते ॥

विष्टरे पुष्पके नित्यं निविष्टाय महात्मने ।
प्रहृष्टवानरानीकजुष्टपादाम्बुजाय ते ॥

निष्पिष्टराक्षसेन्द्राय जगदिष्टविधायिने ।
नमः सहस्रशिरसे सहस्रचरणाय च ॥

सहस्राक्षाय शुद्धाय राघवाय च विष्णवे ।
भक्तार्तिहारिणे तुभ्यं सीतायाः पतये नमः ॥

हरये नारसिंहाय दैत्यराजविदारिणे ।
नमस्तुभ्यं वराहाय दंष्ट्रोद्धृतवसुन्धर ॥

त्रिविक्रमाय भवते बलियज्ञविभेदिने ।
नमो वामनरूपाय महामन्दरधारिणे ॥

नमस्ते मत्स्यरूपाय त्रयीपालनकारिणे ।
नमः परशुरामाय क्षत्रियान्तकराय ते ॥

नमस्ते राक्षसघ्नाय नमो राघवरूपिणे ।
महादेव महाभीम महाकोदण्डभेदिने ॥

क्षत्रियान्तकरक्रूरभार्गवत्रासकारिणे ।
नमोऽस्त्वहल्यासन्तापहारिणे चापहारिणे ॥

नागायुतबलोपेतताटकादेहहारिणे ।
शिलाकठिनविस्तारबालिवक्षोविभेदिने ॥

नमो मायामृगोन्माथकारिणे ज्ञानहारिणे ।
दशस्यन्दनदुःखाब्धिशोषणागस्त्यरूपिणे ॥

अनेकोर्मिसमाधूतसमुद्रमदहारिणे ।
मैथिलीमानसाम्भोजभानवे लोकसाक्षिणे ॥

राजेन्द्राय नमस्तुभ्यं जानकीपतये हरे ।
तारकब्रह्मणे तुभ्यं नमो राजीवलोचन ॥

रामाय रामचन्द्राय वरेण्याय सुखात्मने ।
विश्वामित्रप्रियायेदं नमः खरविदारिणे ॥

प्रसीद देवदेवेश ! भक्तानामभयप्रद ।
रक्ष मां करुणासिन्धो रामचन्द्र नमोऽस्तु ते ॥

रक्ष मां वेदवचसामप्यगोचर राघव ।
पाहि मां कृपया राम ! शरणं त्वामुपैम्यहम् ॥

रघुवीर महामोहमपाकुरु ममाधुना ।
स्नाने चाचमने भुक्तौ जाग्रत्स्वप्नसुषुप्तिषु ॥

सर्वावस्थासु सर्वत्र पाहि मां रघुनन्दन ।
महिमानन्तव स्तोतुं कः समर्थो जगत्त्रये ॥

त्वमेव त्वन्महत्त्वं वै जानासि रघुनन्दन ।
इति स्तुत्वा वायुपुत्रो रामचन्द्रं घृणानिधिम् ॥

( स्क० महापु० ब्राह्मख० १।४६।३१-४९ )

# (झ) कार्तिकेयस्तुतिः

## १. कार्त्तिकेयाष्टोत्तरशतनामवर्णनम्

माली मौली पताकी च जटी मुण्डी शिखण्ड्यपि ।
कुण्डली लाङ्गली बालः कुमारः प्रवरो वरः ॥

गवाम्पुत्रः सुरारिघ्नः सम्भवो भवभावनः ।
पिनाकी शत्रुहा श्वेतो गूढः स्कन्दः कराग्रणीः ॥

द्वादशो भूर्भुवो भावी भुवः पुत्रो नमस्कृतः ।
नागराजः सुधर्मात्मा नाकपृष्ठः सनातनः ॥

त्वं भर्ता सर्वभूतात्मा त्वं त्राता त्वं सुखावहः ।
शरदक्षः शिखी जेता षड्वक्त्रो भयनाशनः ॥

हेमगर्भो महागर्भो जयश्च विजयेश्वरः ।
त्वं कर्त्ता त्वं विधाता च नित्यो नित्यारिमर्दनः ॥

महासेनो महातेजा वीरसेनश्च भूपतिः ।
सिद्धासनः सुराध्यक्षो भीमसेनो निरामयः ॥

शोरिर्यदुर्महातेजा वीर्यवान्सत्यविक्रमः ।
तेजोगर्भोऽसुररिपुः सुरमूर्तिः सुरोर्ज्जितः ॥

कृतज्ञो वरदः सत्यः शरण्यः साधुवत्सलः ।
सुव्रतः सूर्यसङ्काशो वह्निगर्भः कणोभुवः ॥

पिप्पली शीघ्रगो रौद्री गाङ्गेयो रिपुदारणः ।
कार्त्तिकेयः प्रभुः क्षन्ता नीलदंष्ट्रो महामनाः ॥

निग्रहो निग्रहाणां च नेता त्वं सुरनन्दनः ।
प्रग्रहः परमानन्दः क्रोधघ्नस्तार उच्छ्रितः ॥

कुक्कुटी वहुली दिव्यः कामदो भूरिवर्धनः ।
अमोघोऽमृतदो ह्यग्निः शत्रुघ्नः सर्वमोदनः ॥

अव्ययो ह्यमरः श्रीमानुन्नतो ह्यग्निसम्भवः ।
पिशाचराजः सूर्याभः शिवात्मा शिवनन्दनः ॥

अपारपारो दुर्ज्ञेयः सर्वभूतहिते रतः ।
अग्राह्यः कारणं कर्ता परमेष्ठी परं पदम् ॥

अचिन्त्यः सर्वभूतात्मा सर्वात्मा त्वं सनातनः ।
एवं स सर्वभूतानां संस्तुतः परमेश्वरः ॥

नाम्नामष्टशतेनायं विश्वामित्रमहर्षिणा ।
प्रसन्नमूर्त्तिराहेदं मुनीन्द्रं व्रियतामिति ॥

मम त्वया द्विजश्रेष्ठ ! स्तुतिरेषा निरूपिता ।
भविष्यति मनोऽभीष्टप्राप्तये प्राणिनां भुवि ॥

विवर्धते कुले लक्ष्मीस्तस्य यः प्रपठेदिदम् ।
न राक्षसाः पिशाचा वा न भूतानि न चापदः ॥

विघ्नकारीणि तद् गेहे यत्रैव संस्तुवन्ति माम् ।
दुःस्वप्नं च न पश्येत्स बद्धो मुच्येत बन्धनात् ॥

स्तवस्यास्य प्रभावेण दिव्यभावः पुमान्भवेत् ।
त्वं च मां श्रुतिसंस्कारैः सर्वैः संस्कर्तुमर्हसि ॥

संस्काररहितं जन्म यतश्च पशुवत्स्मृतम् ।
त्वं च मद्वरदानेन ब्रह्मर्षिश्च भविष्यसि ॥

( स्क० महापु० माहेश्वरख० कुमा० २९।१२८-१४७ )

## २. अगस्तिकृता स्कन्दस्तुतिः

नमोऽस्तु वृन्दारकवृन्दवन्द्य
पादारविन्दाय सुधाकराय ।
षडाननायामितविक्रमाय
गौरीहृदानन्दसमुद्भवाय ॥
नमोऽस्तु तुभ्यं प्रणतार्त्तिहन्त्रे
कर्त्रे समस्तस्य मनोरथानाम् ।
दात्रे रथानां परतारकस्य
हन्त्रे प्रचण्डासुरतारकस्य ॥

अमूर्त्तरूपाय सहस्रमूर्त्तये
गुणाय गुण्याय परात्पराय ।
अपारपाराय परापराय
नमोऽस्तु तुभ्यं शिखिवाहनाय ॥
नमोऽस्तु ते ब्रह्मविदां वराय
दिगम्बरायाऽम्बरसंस्थिताय ।
हिरण्यवर्णाय हिरण्यबाहवे
नमो हिरण्याय हिरण्यरेतसे ॥
तपः स्वरूपाय तपोधनाय
तपः फलानां प्रतिपादकाय ।
सदा कुमाराय हि मारमारिणे
तृणीकृतैश्वर्यविरागिणे नमः ॥
नमोऽस्तु तुभ्यं शरजन्मने विभो
प्रभातसूर्यारुणदन्तपङ्क्तये ।
बलाय चाबालपराक्रमाय
षाण्मातुरायालमनातुराय ॥
मीढुष्टमायोत्तरमीढुषे नमो
नमो गणानां पतये गणाय ।
नमोऽस्तु ते जन्मजरातिगाय
नमो विशाखाय सुशक्तिपाणये ॥
सर्वस्य नाथस्य कुमारकाय
क्रौञ्चारये तारकमारकाय ।
स्वाहेय गाङ्गेय च कार्त्तिकेय
शैवेय तुभ्यं सततं नमोऽस्तु ॥
इत्थं परिष्टुत्य सकार्त्तिकेयं नमो
नमस्त्वित्यभिभाषमाणः ।
द्विस्त्रिः परिक्रम्य पुरो विवेश
स्थितो मुनीशोपविशेति चोक्तः ॥

(स्क० महापु० काशीख० २५।१०-१८)

### ३. देवैः कृता स्कन्दस्तुतिः

जयाऽतुल शक्तिदीधितिपिञ्जररुचारुणमण्डल-
भुजोद्भासितदेवसैन्यपुरवदनकुमुदकाननविकास-
नेन्दा कुमारनाथ जय दितिकुलमहोदधिवडवानल
मधुररवमयूररवासुर मुकुटकूटकुट्टितचरणनखा-
ङ्कुर महासेन तारकवंशशुष्कतृणदावानल-
योगीश्वर योगिजनहृदयगगनविततचिन्तासन्तान-
सन्तमसनोदनखरकिरणकल्पनखनिकरविराजित -
चरणकमलस्कन्दजयबालसप्तवासर भुवनावलि-
शोकसन्दहन !

नमो नमस्तेऽस्तु मनोरमाय
नमोऽस्तु ते साधुभयापहाय ।
नमोऽस्तु ते बालकृताचलाय
नमो नमो नाशय देवशत्रून् ॥
(स्क० महापु० कुमा०ख० ३१।४७-४८)

## (ज) प्रकीर्णानि स्तोत्राणि

### १. सनत्कुमारकथितं श्रीकालभैरवाष्टकम्

सकलकलुषहारी धूर्तदुष्टान्तकारी
रुचिरचरितचारी मुण्डमौञ्जीप्रचारी ।
करकलितकपाली कुण्डली दण्डपाणिः
स भवतु सुखकारी भैरवो भावहारी ॥

विविधरासविलासविलासितं
नववधूरवधूतपराक्रमम् ।
मदविघूर्णितगोष्पदगोष्पदं
भवपदं सततं सततं स्मरे ॥

अमलकमलनेत्रं चारुचन्द्रावतंसं
सकलगुणगरिष्ठं कामिनीकामरूपम् ।
परिहृतपरितापं डाकिनीनाशहेतुं
भज जन शिवरूपं भैरवं भूतनाथम् ॥

सबलबलविघातं क्षेत्रपालैकपालं
विकटकटिकरालं ह्यट्टहासं विशालम् ।
करगतकरवालं नागयज्ञोपवीतं
भज जन शिवरूपं भैरवं भूतनाथम् ॥
भवभयपरिहारं योगिनीत्रासकारं
सकलसुरगणेशं चारुचन्द्रार्कनेत्रम् ।
मुकुटरुचिरभालं मुक्तमालं विशालं
भज जन शिवरूपं भैरवं भूतनाथम् ॥
चतुर्भुजं शङ्खगदाधरायुधं
पीताम्बरं सान्द्रपयोदसौभगम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं
शीलप्रदं शङ्कररक्षणं भजे ॥
लोकाभिरामं भुवनाभिरामं
प्रियाभिरामं यशसाभिरामम् ।
कीर्त्याभिरामं तपसाऽभिरामं
तं भूतनाथं शरणं प्रपद्ये ॥
आद्यं ब्रह्मसनातनं शुचिपरं सिद्धिप्रदं कामदं
सेव्यं भक्तिसमन्वितं हरिहरैः सृष्ट्या सह साधुभिः ।
योग्यं योगविचारितं युगधरं योग्याननं योगिनं
वन्देऽहं सकलं कलङ्करहितं सत्सेवितं भैरवम् ॥
भैरवाष्टकमिदं पुण्यं प्रातःकाले पठेन्नरः ।
दुःस्वप्ननाशनं तस्य वाञ्छितार्थफलं भवेत् ॥
राजद्वारे विवाहे च सङ्ग्रामे सङ्कटे तथा ।
राज्ञा क्रुद्धेन चाऽऽज्ञप्ते शत्रुबन्धगते तथा ॥
दारिद्रयदुःखनाशाय पठितव्यं समाहितैः ।
न तेषां जायते किञ्चिद् दुर्लभं भुवि वाञ्छितम् ॥
( स्क० महापु० अवन्तीख० ७५।१६-२६ )

## २. रुद्रकथितं क्षेत्रपालनामपरिगणनम्

॥ मन्त्रः—ॐ क्षां क्षेत्रपालाय नमः ॥

अनेनात्र चन्दनादि दत्त्वा राजमाषतण्डुलमिश्रकांश्च चतुःषष्टिकृतभागान्वटकान्निवेद्य तावत्यो दीपिकास्तावन्ति पत्राणि पूगानि निवेद्य दण्डवत्प्रणम्य महास्तुतिमेतां जपेत् ।

ॐ ऊर्ध्वकेशा विरूपाक्षा नित्यं ये घोररूपिणः ।
रक्तनेत्राश्च पिङ्गाक्षाः क्षेत्रपालान्नमामि तान् ॥

अह्वरो ह्यापकुम्भश्च इडाचारस्तथैव यः।
इन्द्रमूर्तिश्च कोलाक्ष उपपाद ऋतुंसनः॥
सिद्धेयेश्चैव बलिको नीलपादेकदंष्ट्रिकः।
इरापतिश्चाऽघहारी विघ्नहारी तथाऽन्तकः॥
ऊर्ध्वपादः कम्बलश्च खञ्जनः खर एव च।
गोमुखश्चैव जङ्घालो गणनाथश्च वारणः॥
जटालोऽप्यजटालश्च नौमिस्वः क्षेत्रपालकान्।
ऋकारो हठकारी च टंकपाणिः खणिस्तथा॥
ठंठंकणो जम्बरश्च स्फुल्लिङ्गास्यस्तडिद्रुचिः।
दन्तुरो घननादश्च नन्दकश्च तथा परः॥
फेत्कारकारी पञ्चास्यो बर्बरी भीमरूपवान्।
भग्नपक्षः कालमेघो युवानो भास्करस्तथा॥
रौरवरश्चापि लम्बोष्ठो वणिजः सुजटालिकः।
सुगन्धो हुहुकश्चैव नौमि पातालरक्षकान्॥
सर्वलिङ्गेषु हुङ्कारः श्मशानेषु भयावहः।
महालक्षो वने घोरे ज्वालाक्षो वसतौ स्थितः॥
एकवृक्षश्च वृक्षेषु करालवदनो निशि।
घण्टारवो गुहावासी पद्मखञ्जो जले स्थितः॥
चत्वरेषु दुरारोहः पर्वते कुरवस्तथा।
निर्झरेषु प्रवाहाख्यो मणिप्रदो निधिष्वपि॥
रसक्षेत्रे रसाध्यक्षो यज्ञवाटेषु कोटनः।
चतुर्दश भुवं व्याप्य स्थिताश्चैवं नमामि तान्॥
एवं चतुःषष्टिमिताञ्छरणं यामि क्षेत्रपान्।
प्रसीदन्तु प्रसीदन्तु तृप्यन्तु मम पूजया॥
सर्वकार्येषु यश्चैवं क्षेत्रपानर्चयेच्छुचिः।
क्षेत्रपास्तस्य तुष्यन्ति यच्छन्ति च समीहितम्॥

(स्क० महापु० कुमा०ख० ६२।२५-३८)

## ३. विप्रैः कृता वृषस्तुतिः

त्वं देवः सर्वगोप्तॄणां विश्वगोप्ता सनातनः।
विघ्नहर्ता ज्ञानदश्च धर्मरूपश्च मोक्षदः॥
त्वमेव धनदः श्रीदः सर्वव्याधिनिषूदनः।
जगतां शर्मकरणे प्रवृत्तः कनकप्रदः॥

तेजसां धाम सर्वेषां सौरभेय महाबल ।
शृङ्गे धृतश्च कैलाशः पार्वतीसहितस्त्वया ॥
वेदस्तुत्यो वेदमयो वेदात्मा वेदवित्तमः ।
वेदवेद्यो वेदयानो वेदरूपो गुणाकरः ॥
गुणत्रयेभ्योऽपि परो याथात्म्यं वेदकस्तव ।
वृषस्त्वं भगवन् देवं यस्तुभ्यं कुरुते त्वघम् ॥
वृषलः स तु विज्ञेयो रौरवादिषु पच्यते ।
पदा स्पृष्ट्वा स तु नरो नरकादिषु यातनाः ॥
सेव्यते पापनिचयैर्निगाढप्रायबन्धनैः ।
क्षुत्क्षामं च तृषाऽऽक्रान्तं महाभारसमन्वितम् ॥
निर्दया ये प्रशोष्यन्ति मतिस्तेषां न शाश्वती ।
चतुर्भिः सहितं मर्त्या विवाहविधिना तु ये ॥
विवाहं नीलरूपस्य ये करिष्यन्ति मानवाः ।
पितॄनुद्दिश्य तेषां वै कुले नैवास्ति नारकी ॥
त्वं गतिः सर्वलोकानां त्वं पिता परमेश्वरः ।
त्वया विना जगत्सर्वं तत्क्षणादेव नश्यति ॥
परा चैव तु पश्यन्ती मध्यमा वैखरी तथा ।
चतुर्विधानां वचसामीश्वरं त्वां विदुर्बुधाः ॥
चतुःशृङ्गं चतुष्पादं द्विशीर्षं सप्तहस्तकम् ।
त्रिधाबद्धं धर्ममयं त्वामेव वृषभं विदुः ॥
तृप्तिदं सर्वभूतानां विश्वव्यापकमोजसा ।
ब्रह्मधर्ममयं नित्यं त्वामात्मानं विदुर्जनाः ॥
अच्छेद्यस्त्वमभेद्यस्त्वमप्रमेयो महायशाः ।
अशोष्यस्त्वमदाह्योऽसि विदुः पौराणिका जनाः ॥
त्वदाधारमिदं सर्वं त्वदाधारमिदं जगत् ।
त्वदाधाराश्च देवाश्च त्वदाधारं तथाऽमृतम् ॥
जीवरूपेण लोकांस्त्रीन् व्याप्य तिष्ठसि नित्यदा ।
एवं स संस्तुतो नीलो विप्रैस्तैः सोमपायिभिः ॥
प्रसन्नवदनो भूत्वा विप्रान्प्रणतितत्परः ।

(स्क० महापु० ब्राह्मख० ३।२७।५४-७०)

## ४. देवैः कृता कामधेनुस्तुतिः

त्वं माता सर्वदेवानां त्वं च यज्ञस्य कारणम् ।
त्वं तीर्थं सर्वतीर्थानां नमस्तेऽस्तु सदानघे ॥

शशिसूर्यारुणा यस्या ललाटे वृषभध्वजः ।
सरस्वती च हुङ्कारे सर्वे नागाश्च कम्बले ॥

खुरपृष्ठे च गन्धर्वा वेदाश्चत्वार एव च ।
मुखाग्रे सर्वतीर्थानि स्थावराणि चराणि च ॥

एवं विधैश्च बहुशो वचनैस्तोषिता च सा ।
सुप्रसन्ना तदा धेनुः किं करोमीति चाब्रवीत् ॥

( स्क० महापु० ब्राह्मख० २।१०।१८-२१ )

## ७. शिवकृता सुरभिस्तुतिः

सृष्टिस्थितिविनाशानां कर्त्र्यै मात्रे नमो नमः ।
या त्वं रसमयैर्भावैराप्यायसि भूतलम् ।
देवानां च तथा संघान् पितॄणामपि वै गणान् ॥

सर्वैर्ज्ञाता रसाभिज्ञैर्मधुरास्वाददायिनि ।
त्वया विश्वमिदं सर्वं बलस्नेहसमन्वितम् ॥

त्वं माता सर्वरुद्राणां वसूनां दुहिता तथा ।
आदित्यानां स्वसा चैव तुष्टा वाञ्छितसिद्धिदा ॥

त्वं धृतिस्त्वं तथा पुष्टिस्त्वं स्वाहा त्वं स्वधा तथा ।
ऋद्धिः सिद्धिस्तथा लक्ष्मीर्धृतिः कीर्तिस्तथा मतिः ॥

कान्तिर्लज्जा महामाया श्रद्धा सर्वार्थसाधिनी ।
त्वया विरहितं किञ्चिन्नास्ति त्रिभुवनेष्वपि ॥

वह्नेस्तृप्तिप्रदात्री च देवादीनां च तृप्तिदा ।
त्वया सर्वमिदं व्याप्तं जगत्स्थावरजङ्गमम् ॥

पादास्ते वेदाश्चत्वारः समुद्राः स्तनतां ययुः ।
चन्द्रार्कौ लोचने यस्या रोमाग्रेषु च देवताः ॥

शृङ्गयोः पर्वताः सर्वे कर्णयोर्वायवस्तथा ।
नाभौ चैवामृतं देवि पातालानि खुरास्तथा ॥

स्कन्धे च भगवान् ब्रह्मा मस्तकस्थः सदाशिवः ।
हृद्देशे च स्थितो विष्णुः पुच्छाग्रे पन्नगास्तथा ॥

शकृत्स्था वसवः सर्वे साध्या मूत्रस्थितास्तव ।
सर्वं यज्ञा ह्यस्थिदेशे किन्नरा गुह्यसंस्थिताः ॥

पितॄणां च गणाः सर्वे पुरःस्था भान्ति सर्वदा ।
सर्वे यक्षा भालदेशे किन्नराश्च कपोलयोः ॥

सर्वदेवमयी त्वं हि सर्वभूतविवृद्धिदा ।
सर्वलोकहिता नित्यं मम देहहिता भव ॥

विप्रशापाग्निना दग्धं शरीरं मम शोभने ।
स्वतेजसा पुनः कर्त्तुमर्हस्यमृतसम्भवे ॥

( स्क० महापु०, ब्राह्मख० ३।२८।३८-४४ )

## ६. अश्वत्थमहिमावर्णनम्

ईश्वरः सर्वभूतानां कृपया वृक्षमाश्रितः ।
चातुर्मास्येऽथ सम्प्राप्ते सर्वभूतदयाकरः ॥

अश्वत्थोऽतः सदा सेव्यो मन्दवारे विशेषतः ।
नित्यमश्वत्थसंस्पर्शात्पापं याति सहस्रधा ॥

दुग्धेन तर्पणं ये वै तिलमिश्रेण भक्तितः ।
सेचनं वा करिष्यन्ति तृप्तिस्तत्पूर्वजेषु च ॥

दर्शनादेव वृक्षस्य पातकं तु विनश्यति ।
पिप्पलः पूजितः ध्यातो दृष्टः सेवित एव वा ॥

पापरोगविनाशाय चातुर्मास्ये विशेषतः ।
अश्वत्थं पूजितं सिक्तं सर्वभूतसुखावहम् ॥

सर्वामयहरं चैव सर्वपापौघहारिणम् ।
ये नराः कीर्त्तयिष्यन्ति नामाप्यश्वत्थवृक्षजम् ॥

न तेषां यमलोकस्य भयं मार्गे प्रजायते ।
कुङ्कुमैश्चन्दनैश्चैव सुलिप्तं यश्च कारयेत् ॥

तस्य तापत्रयाभावो वैकुण्ठे गणना भवेत् ।
दुःस्वप्नं दुष्टचिन्ता च दुष्टज्वरपराभवाः ॥

विलयं नय पापानि पिप्पल ! त्वं हरिप्रिय ।
मन्त्रेणानेन ये देवाः पूजयिष्यन्ति पिप्पलम् ॥

ततस्तेषां धर्मराजो जायते वाक्यकारकः ।
अश्वत्थो वचनेनाऽपि प्रोक्तो ज्ञानप्रदो नृणाम् ॥

श्रुतो हरति पापं च जन्मादिमरणावधि ।
अश्वत्थसेवनं पुण्यं चातुर्मास्ये विशेषतः ॥

सुप्ते देवे वृक्षमध्यमास्थाय भगवान्प्रभुः ।
जलं पृथ्वीगतं सर्वं प्रपिबन्निव सेवते ॥

जलं विष्णुर्जलत्वेन विष्णुरेव रसो महान् ।
तस्माद् वृक्षगतो विष्णुश्चातुर्मास्येऽघनाशनः ॥

सर्वंभूतगतो विष्णुराप्याययति वै जगत् ।
तथोऽश्वत्थगतं विष्णुं यो नमस्येन्न नारकी ॥

अश्वत्थं रोपयेद्यस्तु पृथिव्यां प्रयतो नरः ।
तस्य पापसहस्राणि विलयं यान्ति तत्क्षणात् ॥

अश्वत्थः सर्ववृक्षाणां पवित्रो मङ्गलान्वितः ।
मुक्तिदोऽपि ततो ध्यातश्चातुर्मास्येऽघनाशनः ॥

अश्वत्थे चरणं दत्त्वा ब्रह्महत्या प्रजायते ।
निष्कारणं संकुथित्वा नरके पच्यते ध्रुवम् ॥

मूले विष्णुः स्थितो नित्यं स्कन्धे केशव एव च ।
नारायणस्तु शाखासु पत्रेषु भगवान् हरिः ॥

फलेऽच्युतो न सन्देहः सर्वदेवसमन्वितः ।
चातुर्मास्ये विशेषेण द्रुमः पूज्यः स मुक्तिभाक् ॥

तस्मात्सर्वप्रयत्नेन सदैवाश्वत्थसेवनम् ।
यः करोति नरो भक्त्या पाप याति दिनोद्भवम् ॥

स एव विष्णुर्द्रुम एव मूर्तो
महात्मभिः सेवितपुण्यमूलः ।
यस्याश्रयः पापसहस्रहन्ता
भवेन्नृणां कामदुघो गुणाढ्यः ॥

( स्क० महापु० ब्राह्मख० ३।१५।२४-४४ )

## ७. देवैः कृता ब्राह्मणानां स्तुतिः

नमोऽस्तु वो द्विजातिभ्यो ब्रह्मविद्भ्यो महेश्वराः ॥

भूसुरेभ्यो गुरुभ्यश्च विमुक्तेभ्यश्च बन्धनात् ।
यूयं गुणत्रयातीता गुणरूपागुणाकराः ॥

गुणत्रयमयैर्भावैः सततं प्राणबुद्बुदाः ।
येषां वाक्यजलेनैव पापिष्ठा अपि शुद्धताम् ॥

प्रयान्ति पापपुञ्जाश्च भस्मसाद्यान्ति पापिनाम् ।
शस्त्रं लोहमयं येषां वागेव तत्समन्विता ॥

पापैः परा विभूतानां तेषां लोकोत्तरं बलम् ।
क्षमया पृथिवीतुल्याः कोपे वैश्वानरप्रभाः ॥

पातनेऽनेकशक्तीनां समर्था यूयमेव हि ।
स्वर्गादीनां तथा याने भवन्तो गतयो ध्रुवम् ॥

सत्कर्मकारकाश्चैव सत्कर्मनिरताः सदा ।
सत्कर्मफलदातारः सत्कर्मभ्यो मुमुक्षवः ॥

सावित्रीमन्त्रनिरता ये भवन्तोऽघनाशनाः ।
आत्मानं यजमानं च तारयन्ति न संशयः ॥

वह्नयश्च तथा विप्रास्तर्षिताः कार्यसाधकाः ।
चातुर्मास्ये विशेषेण तेषां पूजा महाफला ॥

कोपिताः सर्वदेहस्य नाशनाय भवन्ति हि ।
तावन्न वज्रमिन्द्रस्य शूलं नैव पिनाकिनः ॥

दण्डो यमस्य तावन्नो यावच्छापो द्विजोद्भवः ।
अग्निना ज्वाल्यते दग्धं शापोऽदृष्टानपि स्वयम् ॥

हन्ति जा।नजातांश्च तस्माद्विप्रं न कोपयेत् ।
विप्रकोपाग्निना दग्धो नरकान्नैव मुच्यते ॥

शस्त्रक्षतोऽपि नरकान्मुच्यते नात्र संशयः: ।
देवानामपि सर्वेषां सामर्थ्यं भेदने न हि ॥

वाङ्मात्रेण हि विप्रस्य भिद्यते सकलञ्जगत् ।
ते यूयं गुरवोऽस्माकं विश्वकारणकारकाः ॥

प्रसादपरमा नित्यं भवन्तु भुवनेश्वराः ।
ईश्वरेण विना सर्वे वयं लोकाश्च दुःखिताः ॥

तत्कथ्यतां स भगवान् कुत्रास्ते परमेश्वरः ।

( स्क० महापु० ब्राह्मख० ३।२७।१९-३३ )

## ८. ब्राह्मणैः कृता हनुमत्स्तुतिः

नमः श्रीरामभक्ताय अक्षविध्वंसनाय च ।
नमो रक्षः पुरीदाहकारिणे वज्रधारिणे ॥

जानकीहृदयत्राणकारिणे करुणात्मने ।
सीताविरहतप्तस्य श्रीरामस्य प्रियाय च ॥

नमोऽस्तु ते महावीर रक्षास्मान्मज्जतः क्षितौ ।
नमो ब्राह्मणदेवाय वायुपुत्राय ते नमः ॥

नमोऽस्तु रामभक्ताय गोब्राह्मणहिताय च।
नमोऽस्तु रुद्ररूपाय कृष्णवक्त्राय ते नमः॥
अञ्जनीसूनवे नित्यं सर्वव्याधिहराय च।
नागयज्ञोपवीताय प्रबळाय नमोऽस्तु ते॥
स्वयं समुद्रतीर्णाय सेतुबन्धनकारिणे॥

(स्क० महापु० ब्राह्मख० २।३७।३-८)

## ९. देवैः कृता ब्रह्मास्तुतिः

नमो जगत्प्रसूत्यै ते हेतवे पालकाय च।
संहर्त्रे च नमस्तुभ्यं तिस्रोऽवस्थास्तव प्रभो॥
त्वमपः प्रथमं सृष्ट्वा तासु वीर्यमवासृजः।
तदण्डमभवद्धैमं यस्मिँल्लोकाश्चराचराः॥
वेदेष्वाहुर्विराड्रूपं त्वामेकरूपमीदृशम्।
पाताळं पादमूलं च पार्ष्णिपादे रसातळम्॥
महातलं चाऽस्य गुल्फौ जङ्घे चाऽपि तळातळम्।
सुतलं जानुनी चास्य ऊरू च वितळातले॥
महीतलं च जघनं नाभिश्चास्य नभस्तळम्।
ज्योतिः पदमुरःस्थानं स्वर्लोको बाहुरुच्यते॥
ग्रीवा महश्च वदनं जनळोकः प्रकीर्त्यते।
ललाटं च तपोलोकः शीर्षं सत्यमुदाहृतम्॥
चन्द्रसूर्यौ च नयने दिशः श्रोत्रे नासिकाश्विनौ।
आत्मानं ब्रह्मरन्ध्रस्थमाहुस्त्वां वेदवादिनः॥
एवं ये ते विराड्रूपं संस्मरन्त उपासते।
जन्मबन्धविनिर्मुक्ता यान्ति त्वां परमं पदम्॥
एवं स्थूलं प्राणिमध्यं च सूक्ष्मं
भावे भावे भावितं त्वां गृणन्ति।
सर्वत्रस्थं त्वामतः प्राहुर्वेदा-
स्तस्मै तुभ्यं पद्मज! इद्विधेम॥

(स्क० महापु० कुमाख० २२।४-१२)

## १०. देवैः कृता ब्रह्मस्तुतिः

नमो हिरण्यगर्भाय ब्रह्मणे ब्रह्मरूपिणे ।
अविज्ञातस्वरूपाय कैवल्यायामृताय च ॥

यन्न देवा विजानन्ति मनो यत्रापि कुण्ठितम् ।
न यत्र वाक्प्रसरति नमस्तस्मै चिदात्मने ॥

योगिनो यं हृदाकाशे प्रणिधानेन निश्चलाः ।
ज्योतीरूपं प्रपश्यन्ति तस्मै श्रीब्रह्मणे नमः ॥

कालात्पराय कालाय स्वेच्छया पुरुषाय च ।
गुणत्रयस्वरूपाय ! नमः प्रकृतिरूपिणे ॥

विष्णवे सत्त्वरूपाय रजोरूपाय वेधसे ।
तमसे रुद्ररूपाय स्थितिसर्गान्तकारिणे ॥

नमो बुद्धिस्वरूपाय त्रिधाहङ्कृतये नमः ।
पञ्चतन्मात्ररूपाय पञ्चकर्मेन्द्रियात्मने ॥

नमो मनःस्वरूपाय पञ्चबुद्धीन्द्रियात्मने ।
क्षित्यादिपञ्चरूपाय नमस्ते विषयात्मने ॥

नमो ब्रह्माण्डरूपाय तदन्तर्वर्तिने नमः ।
समस्तभक्तकृपया स्वेच्छाविष्कृतविग्रह ॥

तव निःश्वसितं वेदास्तव स्वेदोऽखिलं जगत् ।
विश्वभूतानि ते पादः शीर्ष्णो द्यौः समवर्तत ॥

नाभ्या आसीदन्तरिक्षं लोमानि च वनस्पतिः ।
चन्द्रमा मनसो जातश्चक्षोः सूर्यस्तव प्रभो ! ॥

त्वमेव सर्वं त्वयि देव सर्वं
स्तोता स्तुतिः स्तव्य इह त्वमेव ।
ईश त्वयावास्यमिदं हि सर्वं
नमोऽस्तु भूयोऽपि नमो नमस्ते ॥

इति स्तुत्वा विधिं देवा निपेतुर्दण्डवत् क्षितौ ।
परितुष्टस्तदा ब्रह्मा प्रत्युवाच दिवौकसः ॥

× × × ×

यथार्थयाऽनया स्तुत्या तुष्टोऽस्मि प्रणताः सुराः ।
उत्तिष्ठत प्रसन्नोऽस्मि वृणुध्वं वरमुत्तमम् ॥

यः स्तोष्यत्यनया स्तुत्या श्रद्धावान् प्रत्यहं शुचिः ।
मां वा हरं वा विष्णुं वा तस्य तुष्टाः सदा वयम् ॥

दास्यामः सकलान् कामान् पुत्रान्पौत्रान्पशून्वसु ।
सौभाग्यमायुरारोग्यं निर्भरत्वं रणे जयम् ॥

ऐहिकामुष्मिकान्भोगानपवर्गं तथाऽक्षयम् ।
यद्यदिष्टतमं तस्य तत्तत्सर्वं भविष्यति ॥

तस्मात्सर्वप्रयत्नेन पठितव्यः स्तवोत्तमः ।
अभीष्टद इति ख्यातः स्तवोऽयं सर्वसिद्धिदः ॥

( स्क० महापु० काशीख० २।३०-४७ )

## ११. ब्रह्माकृता अग्निस्तुतिः

सत्यतेजो नमस्तेऽस्तु परस्परमहात्मने ।
अद्भुतानां प्रतिश्रोत्रे तेजसां निधिरव्ययः ॥

बीजं यो विश्वभावानां संमोहनविमोहनम् ।
अन्धकारो युगावर्तं काले काले च दुःसहम् ॥

ऊर्ध्ववक्त्र नमस्तेऽस्तु सत्त्वात्मक धरात्मक ।
ज्वलज्ज्वालोत्पन्नजळजलजेशजलेश्वर ॥

जळजोत्फुल्लपत्राक्ष ज्वलद्देवहुताशन ।
कृष्णकान्तः कृष्णमार्गः स्वर्गमार्गप्रदायकः ॥

यज्ञाहुतिसमाचार यज्ञरूप नमो नम ।
स्वर्णगर्भ शमीगर्भ जय देव सनातन ॥

नमो हारमहाहार स्वाहाप्रियतमोहर ।
प्रदीप्तरोचिषे देव चित्रभानो नमोऽस्तु ते ॥

वैश्वानरानळ विभो ऊर्ध्वपावकसर्वग ।
विभावसो महाभाग कृष्णवर्त्म नमो नमः ॥

( स्क० महापु० अवन्तीख० ४।६०-६६ )

## १२. इन्द्रद्युम्नकृता नृसिंहस्तुतिः

नमोऽस्तु ते देववरैकसिंह
नमोऽस्तु पापौघगजैकसिंह ।
नमोऽस्तु दुःखार्णवपारसिंह
नमोऽस्तु तेजोमय दिव्यसिंह ॥

नमोऽस्तु सर्वाकृतिचित्रसिंह
नमोऽस्तु ते क्लेशविमुक्तिसिंह ।
नमोऽस्तु ते दिव्यवपुर्नृसिंह
नमोऽस्तु ते वीरवरैकसिंह ॥
नमोऽस्तु ते दैत्यविदारसिंह
नमोऽस्तु देवेष्वधिदेवसिंह ।
नमोऽस्तु वेदान्तवनैकसिंह
नमोऽस्तु ते योगिगुहैकसिंह ॥
नमोऽस्तु ते सिंह वृषैकसिंह
नमोऽस्तु नीलाचलशृङ्गसिंह ॥

( स्क० महापु० वैष्णवख० २।२८।१४-१७ )

॥ इति स्कन्दमहापुराणे विविधाः स्तुतयः ॥

● ●

# वामनमहापुराणे विविधाः स्तुतयः

## ( क ) विष्णुस्तोत्रम्



## ( ख ) वामनस्तोत्राणि



## ( ग ) शिवस्तोत्राणि

## ( घ ) देवी-( दुर्गा ) स्तोत्राणि



## ( ङ ) प्रकीर्णानि स्तोत्राणि





# वामनपुराणे विविधाः स्तुतयः

## (क) विष्णुस्तोत्रम्

### १. हरकृता विष्णुस्तुतिः

नमस्ते देवतानाथ नमस्ते गरुडध्वज ।
शङ्खचक्रगदापाणे वासुदेव नमोऽस्तु ते ॥

नमस्ते निर्गुणानन्त अप्रतर्क्याय वेधसे ।
ज्ञानाज्ञाननिरालम्ब सर्वालम्ब नमोऽस्तु ते ॥

रजोयुक्त नमस्तेऽस्तु ब्रह्ममूर्त्ते सनातन ।
त्वया सर्वमिदं नाथ जगत्सृष्टं चराचरम् ॥

सत्त्वाधिष्ठितलोकेश विष्णुमूर्त्ते अधोक्षज ।
प्रजापाल महाबाहो जनार्दन नमोऽस्तु ते ॥

तमोमूर्त्ते अहं ह्येष त्वदंशक्रोधसम्भवः ।
गुणाभियुक्त देवेश सर्वव्यापिन् नमोऽस्तु ते ॥

भूरियं त्वं जगन्नाथ जलाम्बरहुताशनः ।
वायुर्बुद्धिर्मनश्चापि शर्वरी त्वं नमोऽस्तु ते ॥

धर्मो यज्ञस्तपः सत्यमहिंसा शौचमार्जवम् ।
क्षमा दानं दया लक्ष्मीर्ब्रह्मचर्यं त्वमीश्वर ॥

त्वं साङ्गाश्चतुरो वेदास्त्वं वेद्यो वेदपारगः ।
उपवेदा भवानीश सर्वोऽसि त्वं नमोऽस्तु ते ॥

नमो नमस्तेऽच्युत चक्रपाणे
नमोऽस्तु ते माधव मीनमूर्ते ।
लोके भवान् कारुणिको मतो मे
त्रायस्व मां केशव पापबन्धनात् ॥

ममाशुभं नाशय विग्रहस्थं
यद् ब्रह्महत्याऽभिभवं बभूव ।
दग्धोऽस्मि नष्टोऽस्म्यसमीक्ष्यकारी
पुनीहि तीर्थोऽसि नमो नमस्ते ॥

( वामनपु० ३।१४-२३ )

## २. विष्णुपञ्जरस्तोत्रम्

नमो नमस्ते गोविन्द चक्रं गृह्य सुदर्शनम् ।
प्राच्यां रक्षस्व मां विष्णो त्वामहं शरणं गतः ॥

गदां कौमोदकीं गृह्य पद्मनाभामितद्युते ।
याम्यां रक्षस्व मां विष्णो त्वामहं शरणं गतः ॥

हलमादाय सौनन्दं नमस्ते पुरुषोत्तम ।
प्रतीच्यां रक्ष मे विष्णो भवन्तं शरणं गतः ॥

शार्ङ्गमादाय च धनुरस्त्रं नारायणं हरे ।
नमस्ते रक्ष रक्षोघ्न ऐशान्यां शरणं गतः ॥

पाञ्चजन्यं महाशङ्खमन्तर्बोध्यं च पङ्कजम् ।
प्रगृह्य रक्ष मां विष्णो आग्नेय्यां यज्ञसूकर ॥

चर्म सूर्यशतं गृह्य शङ्ख चन्द्रमसं तथा ।
नैर्ऋत्यां मां च रक्षस्व दिव्यमूर्ते नृकेसरिन् ॥

वैजयन्तीं प्रगृह्य त्वं श्रीवत्सं कण्ठभूषणम् ।
वायव्यां रक्ष मां देव अश्वशीर्ष नमोऽस्तु ते ॥

वैनतेयं समारुह्य अन्तरिक्षे जनार्दन ।
मां त्वं रक्षाजित सदा नमस्ते त्वपराजित ॥

विशालाक्षं समारुह्य रक्ष मां त्वं रसातले ।
अकूपार नमस्तुभ्यं महामोह नमोऽस्तु ते ॥

करशीर्षाङ्घ्रिपर्वेषु तथाऽष्टबाहुपञ्जरम् ।
कृत्वा रक्षस्व मां देव नमस्ते पुरुषोत्तम ॥

( वामनपु० १८।२७-३६ )

## ३. नारायणस्तवः

नमोऽस्तु ते देवदेव एकशृङ्ग वृषार्च्चे सिन्धुवृष वृषाकपे सुरवृष अनादिसंभव रुद्र कपिल विष्वक्सेन सर्वभूतपते ध्रुव धर्माधर्म वैकुण्ठ वृषावर्त्त अनादिमध्यनिधन धनञ्जय शुचिश्रवः पृश्नितेजः निजजय अमृतेशय सनातन त्रिधाम तुषित महातत्त्व लोकनाथ पद्मनाभ विरञ्चे बहुरूप अक्षय अक्षर हव्यभुज खण्डपरशो शक्र मुञ्जकेश हंस महादक्षिण हृषीकेश सूक्ष्म महानियमधर विरज लोकप्रतिष्ठ अरूप अग्रज धर्मज गभस्तिनाभ शतक्रतुनाभ चन्द्ररथ सूर्यतेजः समुद्रवासः अजः सहस्रशिरः सहस्रपाद अधोमुख महापुरुष पुरुषोत्तम सहस्रबाहो सहस्रमूर्ते सहस्राय सहस्रसंभव सहस्रसत्त्वं त्वामाहुः। पुष्पहास चरम त्वमेव

वौषट् वषट्कारं त्वामाहुरग्र्यं मखेषु प्राशितारं सहस्रधारं च भूश्च भुवश्च स्वश्च त्वमेव वेदवेद्य ब्रह्मशय ब्राह्मणप्रिय त्वमेव द्यौरसि मातरिश्वाऽसि धर्मोऽसि होता पोता मन्ता नेता होमहेतुस् त्वमेव अग्रय् विश्वधाम्ना त्वमेव दिग्भिः सुभाण्ड इज्योऽसि सुमेधोऽसि समिधस्त्वमेव मतिर् गतिर् दाता त्वमसि। मोक्षोऽसि योगोऽसि। सृजसि। धाता परमयज्ञोऽसि दीक्षितोऽसि दक्षिणाऽसि विश्वमसि। स्थविर हिरण्यनाभ नारायण त्रिनयन आदित्यवर्ण आदित्यतेजः महापुरुष पुरुषोत्तम आदिदेव सुविक्रम प्रभाकर शंभो स्वयंभो भूतादिः महाभूतोऽसि विश्वभूत विश्वं त्वमेव विश्वगोप्ताऽसि पवित्रमसि विश्वभव ऊर्ध्वकर्म अमृत दिवस्पते वाचस्पते घृतार्चे अनतकर्म वंश प्राग्वंश विश्वपास्त्वमेव वरार्थिनां वरदोऽसि त्वम्।

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां तुभ्यं होत्रात्मने नमः॥

[वामनपु० (सरोमाहात्म्ये) ५ (गद्यम्)]

## ४. अदितिकृता विष्णुस्तुतिः

नमः कृत्यार्तिनाशाय नमः पुष्करमालिने।
नमः परमकल्याण कल्याणायादिवेधसे॥

नमः पङ्कजनेत्राय नमः पङ्कजनाभये।
नमः पङ्कजसम्भूतिसम्भवायात्मयोनये॥

श्रियः कान्ताय दान्ताय दान्तदृश्याय चक्रिणे।
नमः पद्मासिहस्ताय नमः कनकरेतसे॥

तथात्मज्ञानयज्ञाय योगिचिन्त्याय योगिने।
निर्गुणाय विशेषाय हरये ब्रह्मरूपिणे॥

जगच्च तिष्ठते यत्र जगतो यो न दृश्यते।
नमः स्थूलातिसूक्ष्माय तस्मै देवाय शार्ङ्गिणे॥

यं न पश्यन्ति पश्यन्तो जगदप्यखिलं नराः।
अपश्यद्भिर्जगद्यश्च दृश्यते हृदि संस्थितः॥

बहिर्ज्योतिरलक्ष्यो यो लक्ष्यते ज्योतिषः परः।
यस्मिन्नेव यतश्चैव यस्यैतदखिलं जगत्॥

तस्मै समस्तजगताममराय नमो नमः।
आद्यः प्रजापतिः सोऽपि पितृणां परमः पतिः॥

पतिः सुराणां यस्तस्मै नमः कृष्णाय वेधसे ।
यः प्रवृत्तैर्निवृत्तैश्च कर्मभिस्तु विरज्यते ॥

स्वर्गापवर्गफलदो नमस्तस्मै गदाभृते ।
यस्तु संचिन्त्यमानोऽपि सर्वं पापं व्यपोहति ॥

नमस्तस्मै विशुद्धाय परस्मै हरिमेधसे ।
ये पश्यन्त्यखिलाधारमीशानमजमव्ययम् ॥
न पुनर्जन्ममरणं प्राप्नुवन्ति नमामि तम् ।
यो यज्ञो यज्ञपरमैरिज्यते यज्ञसंस्थितः ॥

तं यज्ञपुरुषं विष्णुं नमामि प्रभुमीश्वरम् ।
गीयते सर्ववेदेषु वेदविद्भिर्विदां गतिः ॥

यस्तस्मै वेदवेद्याय नित्याय विष्णवे नमः ।
यतो विश्वं समुद्भूतं यस्मिन् प्रलयमेष्यति ॥
विश्वोद्भवप्रतिष्ठाय नमतस्मै महात्मने ।
आब्रह्मस्तम्बपर्यन्तं व्याप्तं येन चराचरम् ॥

मायाजालसमुन्नद्धं तमुपेन्द्रं नमाम्यहम् ।
योऽत्र तोयस्वरूपस्थो बिभर्त्यखिलमीश्वरः ॥
विश्वं विश्वपतिं विष्णुं तं नमामि प्रजापतिम् ।
मूर्त्तं तमोऽसुरमयं तद्विधो विनिहन्ति यः ॥

रात्रिजं सूर्यरूपी च तमुपेन्द्रं नमाम्यहम् ।
यस्याक्षिणी चन्द्रसूर्यौ सर्वलोकशुभाशुभम् ॥

पश्यतः कर्मसततं तमुपेन्द्रं नमाम्यहम् ।
यस्मिन् सर्वेश्वरे सर्वं सत्यमेतन्मयोदितम् ॥
नानृतं तमजं विष्णुं नमामि प्रभवाव्ययम् ।
यद्येतत्सत्यमुक्तं मे भूयश्चातो जनार्दन ॥

सत्येन तेन सकलाः पूर्यन्तां मे मनोरथाः ।

( वामनपु० ( सरोमाहात्म्ये ) ६।१७-३६ )

## ५. अदितिगर्भस्थविष्णुस्तवः

देवदेवो जगद्योनिरयोनिर्जगदादिजः ।
अनादिरादिर्विश्वस्य वरेण्यो वरदो हरिः ॥

परावराणां परमः परापरसतां गतिः ।
प्रभुः प्रमाणं मानानां सप्तलोकगुरोर्गुरुः ॥

स्थितिं कर्त्तुं जगन्नाथः सोऽचिन्त्यो गर्भतां गतः ।

प्रभुः प्रभूणां परमः पराणा-
मनादिमध्यो भगवाननन्तः ।
त्रैलोक्यमंशेन सनाथमेकः
कर्त्तुं महात्माऽदितिजोऽवतीर्णः ॥

न यस्य रुद्रो न च पद्मयोनि-
र्नेन्द्रो न सूर्येन्दुमरीचिमिश्राः ।
जानन्ति दैत्याधिप यत्स्वरूपं
स वासुदेवः कलयावतीर्णः ॥

यमक्षरं वेदविदो वदन्ति
विशन्ति यं ज्ञानविधूतपापाः ।
यस्मिन् प्रविष्टा न पुनर्भवन्ति
तं वासुदेवं प्रणमामि देवम् ॥

भूतान्यशेषाणि यतो भवन्ति
यथोर्मयस्तोयनिधेरजस्रम् ।
लयं च यस्मिन् प्रलये प्रयान्ति
तं वासुदेवं प्रणतोऽस्म्यचिन्त्यम् ॥

न यस्य रूपं न बलं प्रभावो
न च प्रतापः परमस्य पुंसः ।
विज्ञायते सर्वपितामहाद्यै-
स्तं वासुदेवं प्रणमामि नित्यम् ॥

रूपस्य चक्षुर्ग्रहणे त्वगेषा
स्पर्शग्रहित्री रसना रसस्य ।
घ्राणं च गन्धग्रहणे नियुक्तं
न घ्राणचक्षुः श्रवणादि तस्य ॥

स्वयं प्रकाशः परमार्थतो यः
सर्वेश्वरो वेदितव्यः स युक्त्या ।
शक्यं तमीड्यमनघं च देवं
ग्राह्यं नतोऽहं हरिमीशितारम् ॥

येनैकदंष्ट्रेण समुद्धृतेयं
धराऽचला धारयतीह सर्वम् ।
शेते ग्रसित्वा सकलं जगद् य-
स्तमीड्यमीशं प्रणतोऽस्मि विष्णुम् ॥

अंशावतीर्णेन च येन गर्भे
हृतानि तेजांसि महाऽसुराणाम् ।
नमामि तं देवमनन्तमीश-
मशेषसंसारतरोः कुठारम् ॥

देवो जगद्योनिरयं महात्मा
स षोडशांशेन महाऽसुरेन्द्राः ।
सुरेन्द्रमातुर्जठरं प्रविष्टो
हृतानि वस्तेन बलं वपूंषि ॥

( वामनपु०, स० मा० ८।१७-२८ )

## ६. गजेन्द्रमोक्षणस्तोत्रम्

ॐ नमो मूलप्रकृतये अजिताय महात्मने ।
अनाश्रिताय देवाय निःस्पृहाय नमोऽस्तु ते ॥

नम आद्याय बीजाय आर्षेयाय प्रवर्त्तिने ।
अनन्तराय चैकाय अव्यक्ताय नमो नमः ॥

नमो गुह्याय गूढाय गुणाय गुणवर्त्तिने ।
अप्रतर्क्याप्रमेयाय अतुलाय नमो नमः ॥

नमः शिवाय शान्ताय निश्चिन्ताय यशस्विने ।
सनातनाय पूर्वाय पुराणाय नमो नमः ॥

नमो देवाधिदेवाय स्वभावाय नमो नमः ।
नमो जगत्प्रतिष्ठाय गोविन्दाय नमो नमः ॥

नमोऽस्तु पद्मनाभाय नमो योगोद्भवाय च ।
विश्वेश्वराय देवाय शिवाय हरये नमः ॥

नमोऽस्तु तस्मै देवाय निर्गुणाय गुणात्मने ।
नारायणाय विश्वाय देवानां परमात्मने ॥

नमो नमः कारणवामनाय
नारायणायामितविक्रमाय ।
श्रीशार्ङ्गचक्रासिगदाधराय
नमोऽस्तु तस्मै पुरुषोत्तमाय ॥

गुह्याय वेदनिलयाय महोदराय
सिंहाय दैत्यनिधनाय चतुर्भुजाय ।
ब्रह्मेन्द्ररुद्रमुनिचारणसंस्तुताय
देवोत्तमाय वरदाय नमोऽच्युताय ॥

नागेन्द्रदेहशयनासनसुप्रियाय
गोक्षीरहेमशुकनीलघनोपमाय ।
पीताम्बराय मधुकैटभनाशनाय
विश्वाय चारुमुकुटाय नमोऽजराय ॥

नाभिप्रजातकमलस्थचतुर्मुखाय
क्षीरोदकार्णवनिकेतयशोधराय ।
नानाविचित्रमुकुटाङ्गदभूषणाय
सर्वेश्वराय वरदाय नमो वराय ॥

भक्तिप्रियाय वरदीप्तसुदर्शनाय
फुल्लारविन्दविपुलायतलोचनाय ।
देवेन्द्रविघ्नमनोद्यतपौरुषाय
योगेश्वराय विरजाय नमो वराय ॥

ब्रह्मायनाय त्रिदशायनाय
लोकाधिनाथाय भवापनाय ।
नारायणायात्महितायनाय
महावराहाय नमस्करोमि ॥

कूटस्थमव्यक्तमचिन्त्यरूपं
नारायणं कारणमादिदेवम् ।
युगान्तशेषं पुरुषं पुराणं
तं देवदेवं शरणं प्रपद्ये ॥

योगेश्वरं चारुविचित्रमौलि-
मज्ञेयमग्र्यं प्रकृतेः परस्थम् ।
क्षेत्रज्ञमात्मप्रभवं वरेण्यं
तं वासुदेवं शरणं प्रपद्ये ॥

अदृश्यमव्यक्तमचिन्त्यमव्ययं
महर्षयो ब्रह्ममयो सनातनम् ।
वदन्ति यं वै पुरुषं सनातनं
तं देवगुह्यं शरणं प्रपद्ये ॥

यदक्षरं ब्रह्म वदन्ति सर्वगं
निशम्य यं मृत्युमुखात् प्रमुच्यते ।
तमीश्वरं तृप्तमनुत्तमैर्गुणैः
परायणं विष्णुमुपैमि शाश्वतम् ॥

कार्यं क्रिया कारणमप्रमेयं
हिरण्यबाहुं वरपद्मनाभम् ।
महाबलं वेदनिधिं सुरेशं
व्रजामि विष्णुं शरणं जनार्दनम् ॥

किरीटकेयूरमहार्हनिष्कै-
र्मण्युत्तमालङ्कृतसर्वगात्रम् ।
पीताम्बरं काञ्चनभक्तिचित्रं
मालाधरं केशवमभ्युपैमि ॥

भवोद्भवं वेदविदां वरिष्ठं
योगात्मनां सांख्यविदां वरिष्ठम् ।
आदित्यरुद्राश्विवसुप्रभावं
प्रभुं प्रपद्येऽच्युतमात्मवन्तम् ।

श्रीवत्साङ्कं महादेवं देवगुह्यमनौपमम् ।
प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम् ।

प्रभवं सर्वभूतानां निर्गुणं परमेश्वरम् ।
प्रपद्ये मुक्तसङ्गानां यतीनां परमां गतिम् ।

भगवन्तं गुणाध्यक्षमक्षरं पुष्करेक्षणम् ।
शरण्यं शरणं भक्त्या प्रपद्ये भक्तवत्सलम् ॥

त्रिविक्रमं त्रिलोकेशं सर्वेषां प्रपितामहम् ।
योगात्मानं महात्मानं प्रपद्येऽहं जनार्दनम् ॥

आदिदेवमजं शम्भुं व्यक्ताव्यक्तं सनातनम् ।
नारायणमणीयांसं प्रपद्ये ब्राह्मणप्रियम् ॥

नमो वराय देवाय नमः सर्वसहाय च ।
प्रपद्ये देवदेवेशमणीयांसमणोः सदा ॥

एकाय लोकतत्त्वाय परतः परमात्मने ।
नमः सहस्रशिरसे अनन्ताय महात्मने ॥

त्वामेव परमं देवमृषयो वेदपारगाः ।
कीर्तयन्ति च यं सर्वे ब्रह्मादीनां परायणम् ॥

नमस्ते पुण्डरीकाक्ष भक्तानामभयप्रद ।
सुब्रह्मण्य नमस्तेऽस्तु त्राहि मां शरणागतम् ॥

( वामनपु० ५८।३१-५९ )

## ७. सारस्वतस्तोत्रम्

ॐ हरिकृष्णं हृषीकेशं वासुदेवं जनार्दनम् ।
प्रणतोऽस्मि जगन्नाथं स मे पापं व्यपोहतु ॥

चराचरगुरुं नाथं गोविन्दं शेषशायिनम् ।
प्रणतोऽस्मि परं देवं स मे पापं व्यपोहतु ॥

शङ्खिनं चक्रिणं शार्ङ्गधारिणं स्रग्धरं परम् ।
प्रणतोऽस्मि पतिं लक्ष्म्याः स मे पापं व्यपोहतु ॥

दामोदरमुदाराक्षं पुण्डरीकाक्षमच्युतम् ।
प्रणतोऽस्मि स्तुतं स्तुत्यैः स मे पापं व्यपोहतु ॥

नारायणं नरं शौरिं माधवं मधुसूदनम् ।
प्रणतोऽस्मि धराधारं स मे पापं व्यपोहतु ॥

केशवं चन्द्रसूर्याक्षं कंसकेशिनिसूदनम् ।
प्रणतोऽस्मि महाबाहुं स मे पापं व्यपोहतु ॥

श्रीवत्सवक्षसं श्रीशं श्रीधरं श्रीनिकेतनम् ।
प्रणतोऽस्मि श्रियः कान्तं स मे पापं व्यपोहतु ॥

यमीशं सर्वभूतानां ध्यायन्ति यतयोऽक्षरम् ।
वासुदेवमनिर्देश्यं तमस्मि शरणं गतः ॥

समस्तालम्बनेभ्यो यं व्यावृत्त्य मनसो गतिम् ।
ध्यायन्ति वासुदेवाख्यं तमस्मि शरणं गतः ॥

सर्वगं सर्वभूतं च सर्वस्याधारमीश्वरम् ।
वासुदेवं परं ब्रह्म तमस्मि शरणं गतः ॥

परमात्मानमव्यक्तं यं प्रयान्ति सुमेधसः ।
कर्मक्षयेऽक्षयं देवं तमस्मि शरणं गतः ॥

पुण्यपापविनिर्मुक्ता यं प्रविश्य पुनर्भवम् ।
न योगिनः प्राप्नुवन्ति तमस्मि शरणं गतः ॥

ब्रह्मा भूत्वा जगत्सर्वं सदेवासुरमानुषम् ।
यः सृजत्यच्युतो देवस्तमस्मि शरणं गतः ॥

ब्रह्मत्वे यस्य वक्त्रेभ्यश्चतुर्वेदमयं वपुः ।
प्रभुः पुरातनो जज्ञे तमस्मि शरणं गतः ॥

ब्रह्मरूपधरं देवं जगद्योनिं जनार्दनम् ।
स्रष्टृत्वे संस्थितं सृष्टौ प्रणतोऽस्मि सनातनम् ॥

स्रष्टा भूत्वा स्थितो योगी स्थितावसुरसूदनः ।
तमादिपुरुषं विष्णुं प्रणतोऽस्मि जनार्दनम् ।।
धृता मही हृता दैत्याः परित्रातास्तथा सुराः ।
येन तं विष्णुमाद्येशं प्रणतोऽस्मि जनार्दनम् ।।
यज्ञैर्यजन्ति यं विप्रा यज्ञेशं यज्ञभावनम् ।
तं यज्ञपुरुष विष्णुं प्रणतोऽस्मि सनातनम् ।।
पातालवीथीभूतानि तथा लोकान् निहन्ति यः ।
तमन्तपुरुष रुद्रं प्रणतोऽस्मि सनातनम् ।।
सभक्षयित्वा सकल यथासृष्टमिद जगत् ।
यो वै नृत्यति रुद्रात्मा प्रणतोऽस्मि जनार्दनम् ।।
सुरासुराः पितृगणा यक्षगन्धर्वराक्षसाः ।
सम्भूता यस्य देवस्य सर्वगं तं नमाम्यहम् ।।
समस्तदेवाः सकला मनुष्याणां च जातयः ।
यस्यांशभूता देवस्य सर्वगं तं नतोऽस्म्यहम् ।।
यस्मान्नान्यत् परं किञ्चिद् यस्मिन् सर्वं महात्मनि ।
यः सर्वमध्यगोऽनन्तः सर्वगं त नमाम्यहम् ।।
यथा सर्वेषु भूतेषु गूढोऽग्निरिव दारुषु ।
विष्णुरेव तथा पापं ममाशेषं प्रणश्यतु ।।
यथा विष्णुमयं सर्वं ब्रह्मादि सचराचरम् ।
यच्च ज्ञानपरिच्छेद्यं पापं नश्यतु मे तथा ।।
शुभाशुभानि कर्माणि रजःसत्त्वतमांसि च ।
अनेकजन्मकर्मोत्थं पापं नश्यतु मे तथा ।।
यन्निशायां च यत्प्रातर्यन्मध्याह्नापराह्णयोः ।
सन्ध्ययोश्च कृतं पापं कर्मणा मनसा गिरा ।।
अज्ञानतो ज्ञानतो वा मदाच्चलितमानसैः ।
तत् क्षिप्रं विलयं यातु वासुदेवस्य कीर्तनात् ।।
परदारपरद्रव्यवाञ्छाद्रोहोद्भव च यत् ।
परपीडोद्भवां निन्दां कुर्वता यन्महात्मनाम् ।।
यच्च भोज्ये तथा पेये भक्ष्ये चोष्ये विलेहने ।
तद् यातु विलयं तोये यथा लवणभाजनम् ।।
यद् बाल्ये यच्च कौमारे यत् पापं यौवने मम ।
वयः परिणतौ यच्च यच्च जन्मान्तरे कृतम् ।।

तन्नारायण गोविन्द हरिकृष्णेश कीर्तनात् ।
प्रयातु विलयं तोये यथा लवणभाजनम् ॥
विष्णवे वासुदेवाय हरये केशवाय च ।
जनार्दनाय कृष्णाय नमो भूयो नमो नमः ॥
भविष्यन्नरकघ्नाय नमः कंसविघातिने ।
अरिष्टकेशिचाणूरदेवारिक्षयिणे नमः ॥
कोऽन्यो बलेर्वञ्चयिता त्वामृते वै भविष्यति ।
कोऽन्यो नाशयति बलाद् दर्पं हैहयभूपतेः ॥
कः करिष्यत्यथाऽन्यो वै सागरे सेतुबन्धनम् ।
वधिष्यति दशग्रीवं कः सामात्यपुरःसरम् ॥
कस्त्वामृतेऽन्यो नन्दस्य गोकुले रतिमेष्यति ।
प्रलम्बपूतनादीनां त्वामृते मधुसूदन ॥
निहन्ताऽप्यथवा शास्ता देवदेव भविष्यति ॥
जपन्नेवं नरः पुण्यं वैष्णवं धर्ममुत्तमम् ।
इष्टानिष्टप्रसङ्गेभ्यो ज्ञानतोऽज्ञानतोऽपि वा ॥
कृतं तेन तु यत् पापं सप्तजन्मान्तराणि वै ।
महापातकसंज्ञं वा तथा चैवोपपातकम् ॥
यज्ञादीनि च पुण्याणि जपहोमव्रतानि च ।
नाशयेद् योगिनां सर्वमामपात्रमिवाम्भसि ॥
नरः संवत्सरं पूर्णं तिलपात्राणि षोडश ।
अहन्यहनि यो दद्यात् पठत्येतच्च तत्समम् ॥
अविलुप्तब्रह्मचर्यं सम्प्राप्य स्मरणं हरेः ।
विष्णुलोकमवाप्नोति सत्यमेतन्मयोदितम् ॥
यथैतत् सत्यमुक्तं मे न ह्यल्पमपि मे मृषा ।
राक्षसस्तत्र सर्वाङ्गं तथा मामेष मुञ्चतु ॥

(वामनपु० ५९।६६-११०)

## ८. पुलस्त्यकृता विष्णुस्तुतिः

(पापप्रशमनस्तवः)

नमस्तेऽस्तु जगन्नाथ देवदेव नमोऽस्तु ते ।
वासुदेव नमस्तेऽस्तु बहुरूप नमोऽस्तु ते ॥

एकशृङ्ग नमस्तुभ्यं नमस्तुभ्यं वृषाकपे।
श्रीनिवास नमस्तेऽस्तु नमस्ते भूतभावन॥

विष्वक्सेन नमस्तुभ्यं नारायण नमोऽस्तु ते।
ध्रुवध्वज नमस्तेऽस्तु सत्यध्वज नमोऽस्तु ते॥

यज्ञध्वज नमस्तुभ्यं धर्मध्वज नमोऽस्तु ते।
तालध्वज नमस्तेऽस्तु नमस्ते गरुडध्वज॥

वरेण्य विष्णो वैकुण्ठ नमस्ते पुरुषोत्तम।
नमो जयन्तविजय जयानन्त पराजित॥

कृतावर्त महावर्त महादेव नमोऽस्तु ते।
अनाद्याद्यन्त मध्यान्त नमस्ते पद्मजप्रिय॥

पुरञ्जय नमस्तुभ्यं शत्रुञ्जय नमोऽस्तु ते।
शुभञ्जय नमस्तेऽस्तु नमस्तेऽस्तु धनञ्जय॥

सृष्टिगर्भ नमस्तुभ्यं शुचिश्रवः पृथुश्रवः।
नमो हिरण्यगर्भाय पद्मगर्भाय ते नमः॥

नमः कमलनेत्राय कालनेत्राय ते नमः।
कालनाभ नमस्तुभ्यं महानाभ नमो नमः॥

वृष्टिमूल महामूल मूलवास नमोऽस्तु ते।
धर्मवास जलावास श्रीनिवास नमोऽस्तु ते॥

धर्माध्यक्ष प्रजाध्यक्ष लोकाध्यक्ष नमो नमः।
सेनाध्यक्ष नमस्तुभ्यं कालाध्यक्ष नमोऽस्तु ते॥

गदाधर श्रुतिधर चक्रधारिन् श्रियोधर।
वनमालाधर हरे नमस्ते धरणीधर॥
आर्चिषेण महासेन नमस्तेऽस्तु पुरुष्टुत।
बहुकल्प महाकल्प नमस्ते कल्पनामुख॥

सर्वात्मन् सर्वग विभो विरिञ्चे श्वेतकेशव।
नीलरक्त महानील अविरुद्ध नमोऽस्तु ते॥

द्वादशात्मक कालात्मन् सामात्मन् परमात्मक।
व्योमकात्मक सुब्रह्मन् भूतात्मक नमोऽस्तु ते॥

हरिकेश महाकेश गुडाकेश नमोऽस्तु ते।
मुञ्जकेश हृषीकेश सर्वनाथ नमोऽस्तु ते॥
सूक्ष्म स्थूल महास्थूल महासूक्ष्म शुभङ्कर।
श्वेतपीताम्बरधर नीलवास नमोऽस्तु ते॥

कुशेशय नमस्तेऽस्तु पद्मेशय जलेशय ।
गोविन्द प्रीतिकर्ता च हंस पीताम्बरप्रिय ॥

अधोक्षज नमस्तुभ्यं सीरध्वज जनार्दन ।
वामनाय नमस्तेऽस्तु नमस्ते मधुसूदन ॥

सहस्रशीर्षाय नमो ब्रह्मशीर्षाय ते नमः ।
नमः सहस्रनेत्राय सोमसूर्यानलेक्षण ॥

नमश्चाथर्वशिरसे महाशीर्षाय ते नमः ।
नमस्ते धर्मनेत्राय महानेत्राय ते नमः ॥

नमः सहस्रपादाय सहस्रभुजमन्यवे ।
नमो यज्ञवराहाय महारूपाय ते नमः ॥

नमस्ते विश्वदेवाय विश्वात्मन् विश्वसम्भव ।
विश्वरूप नमस्तेऽस्तु त्वत्तो विश्वमभूदिदम् ॥

न्यग्रोधस्त्वं महाशाखस्त्वं मूलकुसुमार्चितः ।
स्कन्धपत्राङ्कुरलतापल्लवाय नमोऽस्तु ते ॥

मूलं ते ब्राह्मणा ब्रह्मन् स्कन्धस्ते क्षत्रियाः प्रभो ।
वैश्या शाखा दलं शूद्रा वनस्पते नमोऽस्तु ते ॥

ब्राह्मणाः साग्नयो वक्त्रा दोर्दण्डाः सायुधा नृपाः ।
पार्श्वाद् विशश्चोरुयुगाज्जाताः शूद्राश्च पादतः ॥

नेत्राद् भानुरभूत् तुभ्यं पद्भ्यां भूः श्रोत्रयोर्दिशः ।
नाभ्या ह्यभूदन्तरिक्ष शशाङ्को मनसस्तव ॥

प्राणाद् वायुः समभवत् कामाद् ब्रह्मा पितामहः ।
क्रोधात् त्रिनेत्रयो रुद्रः शीर्ष्णो द्यौः समवर्तत ॥

इन्द्राग्नी वदनात् तुभ्यं पशवो मलसम्भवाः ।
ओषध्यो रोमसंभूता विराजस्त्वं नमोऽस्तु ते ॥

पुष्पहास नमस्तेऽस्तु महाहास नमोऽस्तु ते ।
ॐकारस्त्वं वषट्कारो वौषट् त्व च स्वधा सुधा ॥

स्वाहाकार नमस्तुभ्यं हन्तकार नमोऽस्तु ते ।
सर्वाकार निराकार वेदाकार नमोऽस्तु ते ॥

त्वं हि वेदमयो देवः सर्वदेवमयस्तथा ।
सर्वतीर्थमयश्चैव सर्वयज्ञमयस्तथा ॥

नमस्ते यज्ञपुरुष यज्ञभागभुजे नमः ।
नमः सहस्रधाराय शतधाराय ते नमः ॥

भूर्भुवः स्वः स्वरूपाय गोदायामृतदायिने ।
सुवर्णं ब्रह्मदात्रे च सर्वदात्रे च ते नमः ॥

ब्रह्मेशाय नमस्तुभ्यं ब्रह्मादे ब्रह्मरूपधृक् ।
परब्रह्म नमस्तेऽस्तु शब्दब्रह्म नमोऽस्तु ते ॥

विद्यास्त्व वेद्यरूपस्त्वं वेदनीयस्त्वमेव च ।
बुद्धिस्त्वमपि बोध्यश्च बोधस्त्वं च नमोऽस्तु ते ॥

होता होमश्च हव्य च हूयमानश्च हव्यवाट् ।
पाता पोता च पूतश्च पावनीयश्च ॐ नमः ॥

हन्ता च हन्यमानश्च ह्रियमाणस्त्वमेव च ।
हर्ता नेता च नीतिश्च पूज्योऽग्र्यो विश्वधार्यसि ॥

स्रुक्स्रुवौ परधामासि कपालोलूखलोऽरणिः ।
यज्ञपात्रारणेयस्त्वमेकधा बहुधा त्रिधा ॥

यज्ञस्त्वं यजमानस्त्वमीड्यस्त्वमसि याजकः ।
ज्ञाता ज्ञेयस्तथा ज्ञानं ध्येयो ध्याताऽसि चेश्वर ॥

ध्यानयोगश्च योगी च गतिर्मोक्षो धृतिः सुखम् ।
योगाङ्गानि त्वमीशानः सर्वगस्त्वं नमोऽस्तु ते ॥

ब्रह्मा होता तथोद्गाता साम यूपोऽथ दक्षिणा ।
दीक्षा त्वं त्वं पुरोडाशस्त्वं पशुः पशुवाह्यसि ॥

गुह्यो धाता च परमः शिवो नारायणस्तथा ।
महाजनो निरयनः सहस्रार्केन्दुरूपवान् ॥

द्वादशारोऽथ षण्णाभिस्त्रिव्यूहो द्वियुगस्तथा ।
कालचक्रो भवानीशो नमस्ते पुरुषोत्तमः ।

पराक्रमो विक्रमस्त्वं हयग्रीवो हरीश्वरः ।
नरेश्वरोऽथ ब्रह्मेशः सूर्येशस्त्वं नमोऽस्तु ते ॥

अश्ववक्त्रो महामेधाः शम्भुः शक्रः प्रभञ्जनः ।
मित्रावरुणमूर्त्तिस्त्वममूर्तिरनघः दरः ॥

प्राग्वंशकायो भूतादिर्महाभूतोऽच्युतो द्विजः ।
त्वमूर्ध्वकर्ता ऊर्ध्वश्च ऊर्ध्वरेता नमोऽस्तु ते ॥

महापातकहा त्वं च उपपातकहा तथा ।
अनीशः सर्वपापेभ्यस्त्वामहं शरणं गतः ॥

इत्येतत् परमं स्तोत्रं सर्वपापप्रमोचनम् ।
महेश्वरेण कथितं वाराणस्यां पुरा मुने ॥

केशवास्यग्रतो गत्वा स्नात्वा तीर्थे सितोदके।
उपशान्तस्तथा जातो रुद्रः पापवशात् ततः॥

एतत् पवित्रं त्रिपुरघ्नभाषितं
पठन् नरो विष्णुपरो महर्षे।
विमुक्तपापो ह्युपशान्तिमूर्तिः
संपूज्यते देववरैः प्रसिद्धैः॥

(वामनपु० ६०।१–५१)

## ६. पापप्रशमनस्तवः

मत्स्यं नमस्ये देवेशं कूर्मं गोविन्दमेव च।
हयशीर्षं नमस्येऽहं भवं विष्णुं त्रिविक्रमम्॥

नमस्ये माधवेशानौ हृषीकेशकुमारिणौ।
नारायणं नमस्येऽहं नमस्ये गरुडासनम्॥

ऊर्ध्वकेशं नृसिंहं च रूपधारं कुरुध्वजम्।
कामपालमखण्डं च नमस्ये ब्राह्मणप्रियम्॥

अजितं विश्वकर्माणं पुण्डरीकं द्विजप्रियम्।
हंसं शंभुं नमस्ये च ब्रह्माणं सप्रजापतिम्॥

नमस्ये शूलबाहुं च देवं चक्रधरं तथा।
शिवं विष्णुं सुवर्णाक्षं गोपतिं पीतवाससम्॥

नमस्ये च गदापाणिं नमस्ये च कुशेशयम्।
अर्धनारीश्वरं देवं नमस्ये पापनाशनम्॥

गोपालं च सवैकुण्ठं नमस्ये चापराजितम्।
नमस्ये विश्वरूपं च सौगन्धिं सर्वदाशिवम्॥

पाञ्चालिकं हयग्रीवं स्वयम्भुवममरेश्वरम्।
नमस्ये पुष्कराक्षं च पयोगन्धिं च केशवम्॥

अविमुक्तं च लोलं च ज्येष्ठेशं मध्यमं तथा।
उपशान्तं नमस्येऽहं मार्कण्डेयं सजम्बुकम्॥

नमस्ये पद्मकिरणं नमस्ये वडवामुखम्।
कार्तिकेयं नमस्येऽहं वल्हीकं शिखिनं तथा॥

नमस्ये स्थाणुमनघं नमस्ये वनमालिनम्।
नमस्ये लाङ्गलीशं च नमस्येऽहं श्रियः पतिम्॥

नमस्ये च त्रिनयनं नमस्ये हव्यवाहनम् ।
नमस्ये च त्रिसौवर्णं नमस्ये धरणीधरम् ।।
त्रिणाचिकेतं ब्रह्मेशं नमस्ये शशिभूषणम् ।
कपर्दिनं नमस्ये च सर्वामयविनाशनम् ।।
नमस्ये शशिनं सूर्यं ध्रुवं रौद्रं महौजसम् ।
पद्मनाभं हिरण्याक्षं नमस्ये स्कन्दमव्ययम् ।।
नमस्ये भीमहंसौ च नमस्ये हाटकेश्वरम् ।
सदा हंसं नमस्ये च नमस्ये प्राणतर्पणम् ।।
नमस्ये रुक्मवचं महायोगिनमीश्वरम् ।
नमस्ये श्रीनिवासं च नमस्ये पुरुषोत्तमम् ।।
नमस्ये च चतुर्बाहुं नमस्ये वसुधाधिपम् ।
वनस्पतिं पशुपतिं नमस्ये प्रभुमव्ययम् ।।
श्रीकण्ठं वासुदेवं नीलकण्ठं सदण्डिनम् ।
नमस्ये सर्वमनघं गौरीशं नकुलीश्वरम् ।।
मनोहरं कृष्णकेशं नमस्ये चक्रपाणिनम् ।
यशोधरं महाबाहुं नमस्ये च कुशप्रियम् ।।
भूधरं छादितगदं सुनेत्रं शूलशङ्खिनम् ।
भद्राक्षं वीरभद्रं च नमस्ये शङ्कुकर्णिकम् ।।
वृषध्वजं महेशं च विश्वामित्रं शशिप्रभम् ।
उपेन्द्रं चैव गोविन्दं नमस्ये पङ्कजप्रियम् ।।
सहस्रशिरसं देवं नमस्ये कुन्दमालिनम् ।
कालाग्निं रुद्रदेवेशं नमस्ये कृत्तिवाससम् ।।
नमस्ये छागलेशं च नमस्ये पङ्कजासनम् ।
सहस्राक्षं कोकनदं नमस्ये हरिशङ्करम् ।।
अगस्त्यं गरुडं विष्णुं कपिलं ब्रह्मवाङ्मयम् ।
सनातनं च ब्रह्माणं नमस्ये ब्रह्मतत्परम् ।
अप्रतर्क्यं चतुर्बाहुं सहस्रांशुं तपोमयम् ।
नमस्ये धर्मराजानं देवं गरुडवाहनम् ।।
सर्वभूतगतं शान्तं निर्मलं सर्वलक्षणम् ।
महायोगिनमव्यक्तं नमस्ये पापनाशनम् ।।
निरञ्जनं निराकारं निर्गुणं निर्मलं पदम् ।
नमस्ये पापहन्तारं शरण्यं शरणं व्रजे ।।

एतत् पवित्रं परमं पुराणं
प्रोक्तं त्वगस्त्येन महर्षिणा च।
धन्यं यशस्यं बहुपापनाशनं
संकीर्त्तनात् स्मरणात् संश्रवाच्च ॥
(वामनपु० ६१।२-२६)

# (ख) वामनस्तोत्राणि

## १. ब्रह्माकृता वामनस्तुतिः

जयाधीश जयाजेय जय विश्वगुरो हरे।
जन्ममृत्युजरातीत जयानन्त जयाच्युत ॥
जयाजित जयाशेष जयाव्यक्तस्थिते जय।
परमार्थार्थ सर्वज्ञ ज्ञानज्ञेयार्थनिःसृत ॥
जयाशेष जगत्साक्षिञ्जगत्कर्त्तर्जगद्गुरो।
जगतोऽजगदन्तेश स्थितौ पालयते जय ॥
जयाखिल जयाशेष जय सर्वहृदिस्थित।
जयादिमध्यान्तमय सर्वज्ञानमयोत्तम ॥
मुमुक्षुरनिर्देश्य नित्यहृष्ट जयेश्वर।
योगिभिर्मुक्तिकामैस्तु दमादिगुणभूषण ॥
जयातिसूक्ष्म दुर्ज्ञेय जय स्थूल जगन्मय।
जय सूक्ष्मातिसूक्ष्म त्वं जयानिन्द्रिय सेन्द्रिय ॥
जय स्वमायायोगस्थ शेषभोग जयाक्षर।
जयैकदंष्ट्रप्रान्तेन समुद्धृतवसुंधर ॥
नृकेसरिन् सुरारातिवक्षःस्थलविदारण।
साम्प्रतं जय विश्वात्मन् मायावाहन केशव ॥
निजमायापरिच्छिन्न जगद्धातर्जनार्दन।
जयाचिन्त्य जयानेकस्वरूपैकविधप्रभो ॥
वर्द्धस्व वर्धितानेकविकारप्रकृते हरे।
त्वय्येषा जगतामीशे संस्थिता धर्मपद्धतिः ॥
न त्वामहं न चेशानो नेन्द्राद्यास्त्रिदशा हरे।
ज्ञातुमीशा न मुनयः सनकाद्या न योगिनः ॥

त्वं मायापरसंवीतो जगत्यत्र जगत्पते ।
कस्त्वां वेत्स्यति सर्वेश त्वत्प्रसादं विना नरः ॥

त्वमेवाराधितो यस्य प्रसादसुमुखः प्रभो ।
स एव केवलं देवं वेत्ति त्वां नेतरो जनः ॥

तदीश्वरेश्वरेशान विभो वर्द्धस्व भावन ।
प्रभवायास्य विश्वस्य विश्वात्मन् पृथुलोचन ॥
( वामनपु० स० मा० ६।१८-३१ )

## २. ब्रह्माकृता वामनस्तुतिः

नमोऽस्तु ते माधव सत्त्वमूर्त्ते
नमोऽस्तु ते शाश्वत विश्वरूप ।
नमोऽस्तु ते शत्रुवनेन्धनाग्ने
नमोऽस्तु वै पापमहादवाग्ने ॥

नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्ते जगदाधार नमस्ते पुरुषोत्तम ॥

नारायण जगन्मूर्त्ते जगन्नाथ गदाधर ।
पीतवासः श्रियःकान्त जनार्दन नमोऽस्तु ते ॥

भवांस्त्राता च गोप्ता च विश्वात्मा सर्वगोऽव्ययः ।
सर्वधारी धराधारी रूपधारी नमोऽस्तु ते ॥

वर्धस्व वर्धिताशेषत्रैलोक्यसुरपूजित ।
कुरुष्व दैवतपते मघोनोऽश्रुप्रमार्जनम् ॥

त्वं धाता च विधाता च संहर्त्ता त्वं महेश्वरः ।
महालय महायोगिन् योगशायिन् नमोऽस्तु ते ॥
( वामनपु० ६२।३६-४१ )

## ३. ब्रह्माकृता वामनस्तुतिः

ॐ नमस्ते देवाधिदेव वासुदेव एकशृङ्ग बहुरूप वृषाकपे भूतभावन सुरासुरवृष सुरासुरमथन पीतवासः श्रीनिवास असुरनिर्मितान्त अत्रित-निर्मित कपिल महाकपिल विष्वक्सेन नारायण ध्रुवध्वज सत्यध्वज खड्गध्वज तालध्वज वैकुण्ठ पुरुषोत्तम वेरण्य विष्णो अपराजित जय जयन्त विजय कृतावर्त महादेव अनादे अनन्त आद्यन्तमध्यनिधन पुरञ्जय धनञ्जय शुचिश्रव पृश्निगर्भ कमलगर्भ कमलायताक्ष श्रीपते विष्णुमूल मूलाधिवास धर्माधिवास धर्मवास धर्माध्यक्ष प्रजाध्यक्ष

गदाधर श्रीधर श्रुतिधर वनमालाधर लक्ष्मीधर धरणीधर पद्मनाभ विरिञ्चे आर्ष्टिषेण महासेन सेनाध्यक्ष पुरुष्टुत बहुकल्प महाकल्प कल्पनामुख अनिरुद्ध सर्वग सर्वात्मन् द्वादशात्मक सूर्यात्मक सोमात्मक कालात्मक व्योमात्मक भूतात्मक रसात्मक परमात्मन् सनातन मुञ्जकेश हृषिकेश गुडाकेश केशव नील सूक्ष्म स्थूल पीत रक्त श्वेत श्वेताधिवास रक्ताम्बरप्रिय प्रीतिकर प्रीतिवास हंस नीलवास सीरध्वज सर्वलोकाधिवास कुशेशय अधोक्षज गोविन्द जनार्दन मधुसूदन वामन नमस्ते ।

सहस्रशीर्षोऽसि सहस्रदृगसि सहस्रपादोऽसि त्वं कमलोऽसि महापुरुषोऽसि सहस्रबाहुरसि सहस्रमूर्तिरसि त्वां देवाः प्राहुः सहस्रवदनं ते नमस्ते ।

ॐ नमस्ते विश्वेदेवेश विश्वभूः विश्वात्मक विश्वरूप विश्वसम्भव त्वत्तो विश्वमिदमभवद् ब्राह्मणास्त्वन्मुखेभ्योऽभवन् क्षत्रिया दोः संभूताः ऊरुयुग्माद् विशोऽभवन् शूद्राश्चरणकमलेभ्यः, नाभ्या भवतोऽन्तरिक्षमजायत इन्द्राग्नीवक्त्रतो नेत्राद् भानुरभून्मनसः शशाङ्कः अहं प्रसादजस्तव क्रोधात् त्र्यम्बकः प्राणाज्जातो भवतो मातरिश्वा शिरसो द्यौरजायत श्रोत्राद् दिशो भूरियं चरणादभूतश्श्रोत्रोद्भवादिशोभवतः स्वयंभो नक्षत्रास्तेजोद्भवाः मूर्त्तयश्चामूर्तयश्च सर्वे त्वत्तः समुद्भूताः ।

अतो विश्वात्मकोऽसि ॐ नमस्ते पुष्पहासोऽसि महाहासोऽसि परमोऽसि ॐकारोऽसि वषट्कारोऽसि स्वाहाकारोऽसि वौषट्कारोऽसि स्वधाकारोऽसि वेदमयोऽसि तीर्थमयोऽसि यजमानमयोऽसि यज्ञमयोऽसि सर्वधाताऽसि यज्ञभोक्ताऽसि शुक्रधाताऽसि भूर्द भुवर्द, स्वर्द, स्वर्णद, गोद, अमृतदोऽसीति । ॐ ब्रह्मादिरसि ब्रह्ममयोऽसि यज्ञोऽसि वेदकामोऽसि वेद्योऽसि यज्ञधारोऽसि महामीनोऽसि महासेनोऽसि महाशिरा असि नृकेसर्यसि होताऽसि होम्योऽसि हव्योऽसि हूयमानोऽसि हयमेधोऽसि पोताऽसि पावयिताऽसि पूतोऽसि पूज्योऽसि दाताऽसि हन्यमानोऽसि ह्रियमाणोऽसि हर्त्तासीति ॐ ।

नीतिरसि नेताऽसि अग्र्योऽसि विश्वधामाऽसि शुभाण्डोऽसि ध्रुवोऽसि आरणेयोऽसि ध्यानोऽसि ध्येयोऽसि ज्ञेयोऽसि ज्ञानोऽसि यष्टाऽसि दानोऽसि भूमाऽसि ईक्ष्योऽसि ब्रह्माऽसि होताऽसि उद्गाताऽसि गतिमतां गतिरसि ज्ञानिनां ज्ञानमसि योगिनां योगोऽसि मोक्षगामिनां मोक्षोऽसि श्रीमतां श्रीरसि गुह्योऽसि पाताऽसि परमसि सोमोऽसि सूर्योऽसि दीक्षाऽसि दक्षिणाऽसि नरोऽसि त्रिनयनोऽसि महानयनोऽसि आदित्यप्रभवोऽसि

सुरोत्तमोऽसि शुचिरसि शुक्रोऽसि नभोऽसि नमस्योऽसि इषोऽसि ऊर्जोऽसि सहोऽसि सहस्योऽसि तपोऽसि तपस्योऽसि मधुरसि माधवोऽसि कालोऽसि संक्रमोऽसि विक्रमोऽसि पराक्रमोऽसि अश्वग्रीवोऽसि महामेधोऽसि शंकरोऽसि हरीश्वरोऽसि शम्भुरसि ब्रह्मेशोऽसि सूर्योऽसि मित्रावरुणोऽसि प्राग्वंशकायोऽसि भूतादिरसि महाभूतोऽसि ऊर्ध्वकर्माऽसि कर्त्ताऽसि सर्वपापविमोचनोऽसि त्रिविक्रमोऽसि ॐ नमस्ते ।

( वामनपु० अध्यायः—६६ ( गद्यम् )

# (ग) शिवस्तोत्राणि

## १. ब्रह्माकृता शिवस्तुतिः

अनन्ताय नमस्तुभ्यं वरदाय पिनाकिने ।
महादेवाय देवाय स्थाणवे परमात्मने ॥

नमोऽस्तु भुवनेशाय तुभ्यं तारक सर्वदा ।
ज्ञानानां दायको देवस्त्वमेकः पुरुषोत्तमः ॥

नमस्ते पद्मगर्भाय पद्मेशाय नमो नमः ।
घोरशान्तिस्वरूपाय चण्डक्रोध नमोऽस्तु ते ॥

नमस्ते देव विश्वेश नमस्ते सुरनायक ।
शूलपाणे नमस्तेऽस्तु नमस्ते विश्वभावन ॥

(वामनपु० स० मा० २३।५-८ )

## २. ऋषिगणकृता शिवस्तुतिः

नमस्ते परमात्मन् अनन्तयोने लोकसाक्षिन् परमेष्ठिन् भगवन् सर्वज्ञ क्षेत्रज्ञ परावरज्ञ, ज्ञानज्ञेय सर्वेश्वर महाविरिञ्च महाविभूते महाक्षेत्रज्ञ महापुरुष सर्वभूतावास मनोनिवास आदिदेव महादेव सदाशिव ईशान दुर्विज्ञेय दुराराध्य महाभूतेश्वर, परमेश्वर महायोगेश्वर त्र्यम्बक महायोगिन् परब्रह्मन् परमज्योतिः ब्रह्मविदुत्तम ॐकार, वषट्कार स्वाहाकार स्वधाकार परमकारण, सर्वगत सर्वदर्शिन् सर्वशक्ते सर्वदेव अज, सहस्रार्चिः पृषार्चिः सुधामन् हरधाम अनन्तधाम, संवर्त संकर्षण वडवानल अग्नीषोमात्मक पवित्र महापवित्र महामेघ महामायाधर महाकाम कामहन् हंस परमहंस महाराजिक महेश्वर महाकामुक महाहंस भवक्षयकर सुरसिद्धार्चित हिरण्यवाह हिरण्यरेतः हिरण्यनाथ

हिरण्याग्रकेश मुञ्जकेशिन् सर्वंलोकवरप्रद सर्वानुग्रहकर कमलेशय कुशेशय हृदयेशय ज्ञानोदधे शंभो विभो महायज्ञ महायाज्ञिक सर्वयज्ञमय सर्वयज्ञहृदय सर्वयज्ञसंस्तुत निराश्रय, समुद्रेशय अत्रिसम्भव भक्तानुकम्पिन्, अभग्नयोग योगधर वासुकिमहामणिविद्योतितविग्रह हरितनयन त्रिलोचन जटाधर नीलकण्ठ चन्द्रार्धहर उमाशरीरार्धहर, गजचर्मधर दुस्तरसंसारमहासंहारहर प्रसीद भक्तवत्सल।

(वामनपु० स० मा० अध्यायः—२३)

## ३. वेनकृता शिवस्तुतिः

प्रपद्ये देवमीशानं त्वामजं चन्द्रभूषणम्।
महादेवं महात्मानं विश्वस्य जगतः पतिम्॥

नमस्ते देवदेवेश सर्वशत्रुनिषूदन।
देवेश बलिविष्टम्भदेवदैत्यैश्च पूजित॥

विरूपाक्ष सहस्राक्ष त्र्यक्ष यक्षेश्वरप्रिय।
सर्वतः पाणिपादान्त सर्वतोऽक्षिशिरोमुख॥

सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठसि।
शङ्कुकर्ण महाकर्ण कुम्भकर्णार्णवालय॥

गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोऽस्तु ते।
शतजिह्व शतावर्त शतोदर शतानन॥

गायन्ति त्वां गायत्रिणो ह्यर्चयन्त्यर्कमर्चिणः।
ब्रह्माणं त्वा शतक्रतो उद्वंशमिव मेनिरे॥

मूर्त्तौ हि ते महामूर्त्ते समुद्राम्बुधरास्तथा।
देवताः सर्व एवात्र गोष्ठे गाव इवासते॥

शरीरे तव पश्यामि सोममग्निं जलेश्वरम्।
नारायणं तथा सूर्यं ब्रह्माणं च बृहस्पतिम्॥

भगवान् कारणं कार्यं क्रियाकारणमेव तत्।
प्रभवः प्रलयश्चैव सदसच्चापि दैवतम्॥

नमो भवाय शर्वाय वरदायोग्ररूपिणे।
अन्धकासुरहन्त्रे च पशूनां पतये नमः॥

त्रिजटाय त्रिशीर्षाय त्रिशूलासक्तपाणये।
त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्न नमोऽस्तु ते॥
नमो मुण्डाय चण्डाय अण्डायोत्पत्तिहेतवे।
डिण्डिमासक्तहस्ताय डिण्डिमुण्डाय ते नमः॥

नमोर्ध्वकेशदंष्ट्राय शुष्काय विकृताय च।
धूम्रलोहितकृष्णाय नीलग्रीवाय ते नमः॥

नमोऽस्त्वप्रतिरूपाय निरूपाय शिवाय च।
सूर्यमालाय सूर्याय स्वरूपध्वजमालिने॥

नमो मानातिमानाय नमः पटुतराय ते।
नमो गणेन्द्रनाथाय वृषस्कन्धाय धन्विने॥
संक्रन्दनाय चण्डाय पर्णधारपुटाय च।
नमो हिरण्यकर्णाय नमः कनकवर्चसे॥

नमः स्तुताय स्तुत्याय स्तुतिस्थाय नमोऽस्तु ते।
सर्वाय सर्वभक्षाय सर्वभूतशरीरिणे॥

नमो होत्रे च हन्त्रे च सितोदग्रपताकिने।
नमो नम्याय नम्राय नमः कटकटाय च॥

नमोऽस्तु कृशनाशाय शयितायोत्थिताय च।
स्थिताय धावमानाय मुण्डाय कुटिलाय च॥

नमो नर्त्तनशीलाय लयवादित्रशालिने।
नाट्योपहारलुब्धाय मुखवादित्रशालिने॥

नमो ज्येष्ठाय श्रेष्ठाय बलातिबलघातिने।
कालनाशाय कालाय संसारक्षयरूपिणे॥

हिमवद्दुहितुः कान्त भैरवाय नमोऽस्तु ते।
उग्राय च नमो नित्यं नमोऽस्तु दशबाहवे॥
चितिभस्मप्रियायैव कपालासक्तपाणये।
विभीषणाय भीष्माय भीमव्रतधराय च॥

नमो विकृतवक्त्राय नमः पूतोग्रदृष्टये।
पक्वाममांसलुब्धाय तुम्बिवीणाप्रियाय च॥
नमो वृषाङ्कवृक्षाय गोवृषाभिरुते नमः।
कटङ्कटाय भीमाय नमः परपराय च॥

नमः सर्ववरिष्ठाय वराय वरदायिने।
नमो विरक्तरक्ताय भावनायाक्षमालिने॥
विभेदभेदभिन्नाय छायायै तपनाय च।
अघोरघोररूपाय घोरघोरतराय च॥

नमः शिवाय शान्ताय नमः शान्ततमाय च।
बहुनेत्रकपालाय एकमूर्त्ते नमोऽस्तु ते॥

नमः क्षुद्राय लुब्धाय यज्ञभागप्रियाय च।
पञ्चालाय सिताङ्गाय नमो यमनियामने॥

नमश्चित्रोरुघण्टाय घण्टाघण्टनिघण्टिने।
सहस्रशतघण्टाय घण्टामालाविभूषिणे॥

प्राणसंघट्टगर्वाय नमः किलिकिलिप्रिये।
हुँहुँकाराय पाराय हुँहुँकारप्रियाय च॥

नमः समसमे नित्यं गृहवृक्षनिकेतिने।
गर्भमांसश्रृगालाय तारकाय तराय च॥

नमो यज्ञाय यजिने हुताय प्रहुताय च।
यज्ञवाहाय हव्याय तप्याय तपनाय च॥

नमस्तु पयसे तुभ्यं तुण्डानां पतये नमः।
अन्नदायान्नपतये नमो नानान्नभोजिने॥

नमः सहस्रशीर्षाय सहस्रचरणाय च।
सहस्रोद्यतशूलाय सहस्राभरणाय च॥

बालानुचरगोप्त्रे च बाललीलाविलासिने।
नमो बालाय वृद्धाय क्षुब्धाय क्षोभणाय च॥

गङ्गालुलितकेशाय मुञ्जकेशाय वै नमः।
नमः षट्कर्मतुष्टाय त्रिकर्मनिरताय च॥

नग्नप्राणाय चण्डाय कृशाय स्फोटनाय च।
धर्मार्थकाममोक्षाणां कथ्याय कथनाय च॥

सांख्याय सांख्यमुख्याय सांख्ययोगमुखाय च।
नमो विरथरथ्याय चतुष्पथरथाय च॥

कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने।
वक्त्रसंधानकेशाय हरिकेश नमोऽस्तु ते॥

त्र्यम्बिकाम्बिकनाथाय व्यक्ताव्यक्ताय वेधसे।
कामकामदकामघ्न तृप्तातृप्तविचारिणे॥

नमः सर्वद पापघ्न कल्पसंख्याविचारिणे॥

महासत्त्व महाबाहो महाबल नमोऽस्तु ते।
महामेघ महाप्रख्य महाकाल महाद्युते॥

मेघावर्त युगावर्त चन्द्रार्कपतये नमः।
त्वमन्नमन्नभोक्ता च पक्वभुक् पावनोत्तम॥

जरायुजाण्डजाश्चैव स्वेदजोद्भिज्जजाश्च ये ।
त्वमेव देवदेवेश भूतग्रामश्चतुर्विधः ॥

स्रष्टा चराचरस्यास्य पाता हन्ता तथैव च ।
त्वामाहुर्ब्रह्म विद्वांसो ब्रह्म ब्रह्मविदां गतिम् ॥

मनसः परमज्योतिस्त्वं वायुर्ज्योतिषामपि ।
हंसवृक्षे मधुकरमाहुस्त्वां ब्रह्मवादिनः ॥

यजुर्मयो ऋङ्मयस्त्वामाहुः साममयस्तथा ।
पठ्यसे स्तुतिभिर्नित्यं वेदोपनिषदां गणैः ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये ।
त्वमेव मेघसंघाश्च विद्युतोऽशनिगर्जितम् ॥

संवत्सरस्त्वमृतवो मासो मासार्धमेव च ।
युगाः निमेषाः काष्ठाश्च नक्षत्राणि ग्रहाः कलाः ॥

वृक्षाणां ककुभोऽसि त्वं गिरीणां हिमवान् गिरिः ।
व्याघ्रो मृगाणां पततां ताक्ष्योऽनन्तश्च भोगिनाम् ॥

क्षीरोदोऽस्युदधीनां च यन्त्राणां धनुरेव च ।
वज्रं प्रहरणानां च व्रतानां सत्यमेव च ॥

त्वमेव द्वेष इच्छा च रागो मोहः क्षमाक्षमे ।
व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ ॥

त्वं शरी त्वं गदी चापि खट्वाङ्गी च शरासनी ।
छेत्ता भेत्ता प्रहर्त्ताऽसि मन्ता नेता सनातनः ॥

दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च ।
समुद्राः सरितो गङ्गा पर्वताश्च सरांसि च ॥

लतावल्ल्यस्तृणौषध्यः पशवो मृगपक्षिणः ।
द्रव्यकर्मगुणारम्भः कालपुष्पफलप्रदः ॥

आदिश्चान्तश्च वेदानां गायत्री प्रणवस्तथा ।
लोहितो हरितो नीलः कृष्णः पीतः सितस्तथा ॥

कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा ।
सवर्णश्चाप्यवर्णश्च कर्त्ता हर्त्ता त्वमेव हि ॥

त्वमिन्द्रश्च यमश्चैव वरुणो धनदोऽनिलः ।
उपप्लवश्चित्रभानुः स्वर्भानुरेव च ॥

शिक्षाहौत्रं त्रिसौपर्णं यजुषां शतरुद्रियम् ।
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ॥

तिन्दुको गिरिजो वृक्षो मुद्गं चाखिलजीवनम् ।
प्राणाः सत्त्वं रजश्चैव तमश्च प्रतिपत्पतिः ॥

प्राणोऽपानः समानश्च उदानो व्यान एव च ।
उन्मेषश्च निमेषश्च क्षुतं जृम्भितमेव च ॥

लोहितान्तर्गतो दृष्टिर्महावक्त्रो महोदरः ।
शुचिरोमा हरिश्मश्रुरूर्ध्वकेशश्चलाचलः ॥

गीतवादित्रनृत्यज्ञो गीतवादित्रकप्रियः ।
मत्स्यो जालो जलौकाश्च कालः केलिकला कलिः ॥

अकालश्च विकालश्च दुष्कालः काल एव च ।
मृत्युश्च मृत्युकर्त्ता च यक्षो यक्षभयङ्करः ॥

संवर्त्तकोऽन्तकश्चैव संवर्त्तकबलाहकः ।
घण्टो घण्टी महाघण्टी चिरो माली च मातलिः ॥

ब्रह्मकालयमाग्नीनां दण्डी मुण्डी त्रिमुण्डधृक् ।
चतुर्युगश्चतुर्वेदश्चातुर्होत्रप्रवर्त्तकः ॥
चातुराश्रम्यनेता च चातुर्वर्ण्यकरस्तथा ।
नित्यमक्षप्रियो धूर्त्तो गणाध्यक्षो गणाधिपः ॥

रक्तमाल्याम्बरधरो गिरिको गिरिकप्रियः ।
शिल्पं च शिल्पिनां श्रेष्ठः सर्वशिल्पप्रवर्त्तकः ॥

भगनेत्राङ्कुशश्चण्डः पूष्णो दन्तविनाशनः ।
स्वाहा स्वधा वषट्कारो नमस्कारो नमो नमः ॥
गूढव्रतो गुह्यतपास्तारकास्तारकामयः ।
धाता विधाता संधाता पृथिव्या धरणोऽपरः ॥

ब्रह्मा तपश्च सत्यं च व्रतचर्यमथार्जवम् ।
भूतात्मा भूतकृद् भूतिर्भूतभव्यभवोद्भवः ॥

भूर्भुवः स्वर्ऋतं चैव ध्रुवो दान्तो महेश्वरः ।
दीक्षितोऽदीक्षितः कान्तो दुर्दान्तो दान्तसम्भवः ॥

चन्द्रावर्तो युगावर्तः संवर्त्तकप्रवर्तकः ।
बिन्दुः कामो ह्यणुः स्थूलः कर्णिकारस्रजप्रियः ॥
नन्दीमुखो भीममुखः सुमुखो दुर्मुखस्तथा ।
हिरण्यगर्भः शकुनिर्महोरगपतिर्विराट् ॥

अधर्महा महादेवो दण्डधारो गजोत्कटः ।
गोनर्दो गोप्रतारश्च गोवृषेश्वरवाहनः ॥

त्रैलोक्यगोप्ता गोविन्दो गोमार्गो मार्ग एव च ।
स्थिरः श्रेष्ठश्च स्थाणुश्च विक्रोशः क्रोश एव च ॥

दुर्वारणो दुर्विषहो दुःसहो दुरतिक्रमः ।
दुर्द्धर्षो दुष्प्रकाशश्च दुर्दर्शो दुर्जयो जयः ॥

शशाङ्कानलशीतोष्णः क्षुत्तृष्णा च निरामयः ।
आधयो व्याधयश्चैव व्याधिहा व्याधिनाशनः ॥

समूहश्च समूहस्य हन्ता देवः सनातनः ।
शिखण्डी पुण्डरीकाक्षः पुण्डरीकवनालयः ॥

त्र्यम्बको दण्डधारश्च उग्रदंष्ट्रः कुलान्तकः ।
विषापहः सुरश्रेष्ठः सोमपास्त्वं मरुत्पते ॥
अमृताशी जगन्नाथो देवदेव गणेश्वरः ।

मधुश्च्युतानां मधुपो ब्रह्मवाक् त्वं घृतच्युतः ।
सर्वलोकस्य भोक्ता त्वं सर्वलोकपितामहः ॥

हिरण्यरेताः पुरुषस्त्वमेकः
त्वं स्त्री पुमांस्त्वं हि नपुंसकं च ।
बालो युवा स्थविरो देवदंष्ट्रा
त्वन्नो गिरिर्विश्वकृद् विश्वहर्त्ता ॥
त्वं वै धाता विश्वकृतां वरेण्यस्
त्वां पूजयन्ति प्रणताः सदैव ।
चन्द्रादित्यौ चक्षुषी ते भवान् हि
त्वमेव चाग्निः प्रपितामहश्च ॥
आराध्य त्वां सरस्वतीं वाग्लभन्ते
अहोरात्रे निमेषोन्मेषकर्त्ता ॥

न ब्रह्मा न च गोविन्दः पौराणा ऋषयो न ते ।
माहात्म्यं वेदितुं शक्ता याथातथ्येन शंकर ॥

पुंसां शतसहस्राणि यत्समावृत्य तिष्ठति ।
महतस्तमसः पारे गोप्ता मन्ता भवान् सदा ॥
यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥

या मूर्तयश्च सूक्ष्मास्ते न शक्या या निर्दशितुम् ।
ताभिर्मां सततं रक्ष पिता पुत्रमिवौरसम् ॥
रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तु ते ।
भक्तानुकम्पी भगवान् भक्तश्चाहं सदा त्वयि ॥
जटिने दण्डिने नित्यं लम्बोदरशरीरिणे ।
कमण्डलुनिषङ्गाय तस्मै रुद्रात्मने नमः ॥
यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥
संभक्ष्य सर्वभूतानि युगान्ते पर्युपस्थिते ।
यः शेते जलमध्यस्थस्त प्रपद्येऽम्बुशायिनम् ॥
प्रविश्य वदनं राहोर्यः सोमं पिबते निशि ।
ग्रसत्यर्कं च स्वर्भानू रक्षितस्तव तेजसा ॥
ये चात्र पतिता गर्भा रुद्रगन्धस्य रक्षिणे ।
नमस्तेऽस्तु स्वधा स्वाहा प्राप्नुवन्ति तदद्भुते ॥
येऽङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्वदेहिनाम् ।
रक्षन्तु ते हि मां नित्यं ते मामाप्याययन्तु वै ॥
ये नदीषु समुद्रेषु पर्वतेषु गुहासु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ॥
चतुष्पथेषु रथ्यासु चत्वरेषु सभासु च ।
हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ॥
ये च पञ्चसु भूतेषु दिशासु विदिशासु च ।
चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्करश्मिषु ॥
रसातलगता ये च ये च तस्मात् परं गताः ।
नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्यश्च नित्यशः ॥
येषां न विद्यते संख्या प्रमाणं रूपमेव च ।
असंख्येयगणा रुद्रा नमस्तेभ्योऽस्तु नित्यशः ॥
प्रसीद मम भद्रं ते तव भावगतस्य च ।
त्वयि मे हृदयं देव त्वयि बुद्धिर्मतिस्त्वयि ॥
स्तुत्वैवं महादेवं विरराम द्विजोत्तमः ॥

( वामनपु० सरोमाहात्म्ये० २६।६३-१६३ )

### ४. ब्रह्माकृता शिवस्तुतिः

नमस्तेऽस्तु महादेव भूतभव्यभवाश्रय ।
नमस्ते स्तुतिनित्याय नमस्त्रैलोक्यपालिने ॥
नमः पवित्रदेहाय सर्वकल्मषनाशिने ।
चराचरगुरो गुह्य गुह्यानां च प्रकाशकृत् ॥
रोगा न यान्ति भिषजैः सर्वरोगविनाशन ।
रौरवाजिनसंवीत वीतशोक नमोऽस्तु ते ॥
वारिकल्लोलसंक्षुब्धमहाबुद्धिविघट्टिने ।
त्वन्नामजापिनो देव न भवन्ति भवाश्रयाः ॥
नमस्ते नित्यनित्याय नमस्त्रैलोक्यपालन ।
शंकरायाप्रमेयाय व्याधीनां शमनाय च ॥
परायापरिमेयाय सर्वभूतप्रियाय च ।
योगेश्वराय देवाय सर्वपापक्षयाय च ॥
नमः स्थाणवे सिद्धाय सिद्धवन्दिस्तुताय च ।
भूतसंसारदुर्गाय विश्वरूपाय ते नमः ॥
फणीन्द्रोक्तमहिम्ने ते फणीन्द्राङ्गदधारिणे ।
फणीन्द्रवरहाराय भास्कराय नमो नमः ॥

( वामनपु० स० मा० २८।११-१८ )

### ५. कन्यकाभिः कृता शिव-(हाटकेश्वर) स्तुतिः

नमोऽस्तु शर्व शंभो त्रिनेत्र चारुगात्र त्रैलोक्यनाथ उमापते दक्षयज्ञविध्वंसकर कामाङ्गनाशन घोर पापप्रणाशन महापुरुष महोग्रमूर्ते सर्वसत्त्वक्षयंकर शुभंकर महेश्वर त्रिशूलधारिन् स्मरारे गुहावासिन् दिग्वासो महाशङ्खशेखर जटाधर कपालमालाविभूषितशरीर वामचक्षुः वामदेव प्रजाध्यक्ष भगाक्ष्णोः क्षयङ्कर भीमसेन महासेननाथ पशुपते कामाङ्गदहन चत्वरवासिन् शिव महादेव ईशान शङ्कर भीम भव वृषभध्वज जटिल प्रौढ महानाट्येश्वर भूमिरत्न अविमुक्तक रुद्र रुद्रेश्वर स्थाणो एकलिङ्ग कालिन्दीप्रिय श्रीकण्ठ नीलकण्ठ अपराजित रिपुभयङ्कर संतोषपते वामदेव अघोर तत्पुरुष महाघोर अघोरमूर्त्ते शान्त सरस्वतीकान्त कीनाट सहस्रमूर्त्ते भवोद्भव विभो कालाग्निरुद्र रुद्र हर महीधरप्रिय सर्वतीर्थाधिवास हंस कामेश्वर केदाराधिपते परिपूर्ण मुचुकुन्द मधुनिवासिन् कृपाणपाणे भयंकर विद्याराज सोमराज कामराज रञ्जक अञ्जन राजकन्याहृदयचलवसते समुद्रशायिन् ।

[ वामनपु० अ० ३९ (गद्यम्) ]

### ६. शुक्रकृता शिवस्तुतिः

वरदाय नमस्तुभ्यं हराय गुणशालिने ।
शंकराय महेशाय त्र्यम्बकाय नमो नमः ॥

जीवनाय नमस्तुभ्यं लोकनाथ वृषाकपे ।
मदनाग्ने कालशत्रो वामदेवाय ते नमः ॥

स्थाणवे विश्वरूपाय वामनाय सदागते ।
महादेवाय शर्वाय ईश्वराय नमो नमः ॥

त्रिनयन हर भव शंकर उमापते जीमूतकेतो गुहागृहश्मशाननिरत-भूतिविलेपनशूलपाणे पशुपते गोपते तत्पुरुषसत्तम नमो नमस्ते ।

( वामनपु० ४३।२६-३१ )

### ७. शुक्रकृता शिवस्तुतिः

विश्वरूप महारूप विश्वरूपाक्षसूत्रधृक् ।
सहस्राक्ष महादेव त्वामहं शरणं गतः ॥

नमोऽस्तु ते शंकर शर्व शंभो
सहस्रनेत्राङ्घ्रिभुजङ्गभूषण ।
दृष्ट्वैव सर्वान् भुवनांस्तवोदरे
श्रान्तो भवन्तं शरणं प्रपन्नः ॥

( वामनपु० ४३।४०-४१ )

### ८. अन्धककृता शिवस्तुतिः

नमोऽस्तु ते भैरवभीममूर्त्ते
त्रिलोकगोप्त्रे शितशूलधारिणे ।
विंशार्द्धबाहो भुजगेशहार
त्रिनेत्र मां पाहि विपन्नबुद्धिम् ॥

जयस्व सर्वेश्वर विश्वमूर्त्ते
सुरासुरैर्वन्दितपादपीठ ।
त्रैलोक्यमातुर्गुरवे वृषाङ्क
भीतः शरण्यं शरणागतोऽस्मि ॥

त्वां नाथ देवाः शिवमीरयन्ति
सिद्धा हर स्थाणुं महर्षयश्च ।
भीमं च यक्षा मनुजा महेश्वरं
भूताश्च भूताधिपमामनन्ति ॥

निशाचरा उग्रमुपार्चयन्ति
　　भवेति पुण्याः पितरो नमन्ति ।
दासोऽस्मि तुभ्यं हर पाहि मह्यं
　　पापक्षयं मे कुरु लोकनाथ ॥

भवांस्त्रिदेवस्त्रियुगस्त्रिधर्मा
　　त्रिपुष्करश्चासि विभो त्रिनेत्र ।
त्र्यय्यारुणिस्त्रिश्रुतिरव्ययात्मन्
　　पुनीहि मां त्वां शरणं गतोऽस्मि ॥

त्रिणाचिकेतस्त्रिपदप्रतिष्ठः
　　षडङ्गवित् त्वं विषयेष्वलुब्ध ।
त्रैलोक्यनाथोऽसि पुनीहि शंभो
　　दासोऽस्मि भीतः शरणागतस्ते ॥

कृतं महत् शंकर तेऽपराधं
　　मया महाभूतपते गिरीश ।
कामारिणा निर्जितमानसेन
　　प्रसादये त्वां शिरसा नतोऽस्मि ॥

पापोऽहं पापकर्माऽहं पापात्मा पापसम्भवः ।
त्राहि मां देव ईशान् सर्वपापहरो भव ॥
मा मे क्रुध्यस्व देवेश त्वया चैतादृशोऽस्म्यहम् ।
सृष्टः पापसमाचारो मे प्रसन्नो भवेश्वर ॥

त्वं कर्त्ता चैव धाता च त्वं जयस्त्वं महाजयः ।
त्वं मङ्गल्यस्त्वमोङ्कारस्त्वमीशानो ध्रुवोऽव्ययः ॥
त्वं ब्रह्मा सृष्टिकृन्नाथस्त्वं विष्णुस्त्वं महेश्वरः ।
त्वमिन्द्रस्त्वं वषट्कारो धर्मस्त्वं च सुरोत्तमः ॥

सूक्ष्मस्त्वं व्यक्तरूपस्त्वं त्वमव्यक्तस्त्वमीश्वरः ।
त्वया सर्वमिद व्याप्तं जगत्स्थावरजङ्गमम् ॥
त्वमादिरन्तो मध्यश्च त्वमनादिः सहस्रपात् ।
विजयस्त्वं सहस्राक्षो विरूपाक्षो महाभुजः ॥
अनन्तः सर्वगो व्यापी हंसः प्राणाधिपोऽच्युतः ।
गीर्वाणपतिरव्यग्रो रुद्रः पशुपतिः शिवः ।
त्रैविद्यस्त्वं जितक्रोधो जितारिर्विजितेन्द्रियः ।
जयश्च शूलपाणिस्त्वं त्राहि मां शरणागतम् ॥

( वामनपु० ४४।५२-६६ )

# (घ) देवी--(दुर्गा) स्तोत्राणि

## १. देवगणकृता कात्यायनीस्तुतिः

नमोऽस्तु देव्यै सुरपूजितायै
या संस्थिता योगविशुद्धदेहा ।
निद्रास्वरूपेण महीं वितत्य
तृष्णा त्रपा क्षुद्भयदाऽथ कान्तिः ॥
श्रद्धा स्मृतिः पुष्टिरथो क्षमा च
छाया च शक्तिः कमलालया च ।
वृतिर्दया भ्रान्तिरथेह माया
नमोऽस्तु देव्यै भवरूपिकायै ॥

( वामनपु० १९।१९-२० )

## २. देवगणकृता देवीस्तुतिः

नमोऽस्तु ते भगवति पापनाशिनि
नमोऽस्तु ते सुररिपुदर्पशातनि ।
नमोऽस्तु ते हरिहरराज्यदायिनि
नमोऽस्तु ते मखभुजकार्यकारिणि ॥
नमोऽस्तु ते त्रिदशरिपुक्षयङ्करि
नमोऽस्तु ते शतमखपादपूजिते ।
नमोऽस्तु ते महिषविनाशकारिणि
नमोऽस्तु ते हरिहरभास्करस्तुते ॥
नमोऽस्तु ते अष्टादशबाहुशालिनि
नमोऽस्तु ते शुम्भनिशुम्भघातिनि ।
नमोऽस्तु लोकार्तिहरे त्रिशूलिनि
नमोऽस्तु नारायणि चक्रधारिणि ॥
नमोऽस्तु वाराहि सदाधराधरे
त्वां नारसिंहि प्रणता नमोऽस्तु ते ।
नमोऽस्तु ते वज्रधरे गजध्वजे
नमोऽस्तु कौमारि मयूरवाहिनि ॥

नमोऽस्तु पैतामहहंसवाहने
नमोऽस्तु मालाविकटे सुकेशिनि ।
नमोऽस्तु ते रासभपृष्ठवाहिनि
नमोऽस्तु सर्वार्तिहरे जगन्मये ॥

नमोऽस्तु विश्वेश्वरि पाहि विश्वं
निषूदयारीन् द्विजदेवतानाम् ।
नमोऽस्तु ते सर्वमयि त्रिनेत्रे
नमो नमस्ते वरदे प्रसीद ॥

ब्रह्माणी त्वं मृडानी वरशिखिगमना शक्तिहस्ता कुमारी
वाराही त्वं सुवक्त्रा खगपतिगमना वैष्णवी त्वं सशार्ङ्गी ।
दुर्दृश्या नारसिंही घुरघुरितरवा त्वं तथैन्द्री सवज्रा
त्वं मारी चर्ममुण्डा शवगमनरता योगिनी योगसिद्धा ॥

नमस्ते त्रिनेत्रे भगवति तव चरणानुषिता ये
अहरहर्विनतशिरसोवनताः ।
नहि नहि परिभवमस्त्यशुभं च ।
स्तुतिबलिकुसुमकराः सततं ये ॥

( वामनपु० ३०।५६-६३ )

### २. अन्धककृता पार्वतीस्तुतिः

ॐ नमस्ये भवानीं भूतभव्यप्रियां लोकधात्रीं जनित्रीं स्कन्दमातरं महादेवप्रियां धारिणीं स्यन्दिनीं चेतनां त्रैलोक्यमातरं धरित्रीं देवमातरमथेज्यां श्रुतिं स्मृतिं दयां लज्जां कान्तिमग्र्यामसूयां मतिं सदापावनीं दैत्यसैन्यक्षयकरीं महामायां वैजयन्तीं सुशुभां कालरात्रिं गोविन्दभगिनीं शैलराजपुत्रीं सर्वदेवार्चितां सर्वभूतार्चितां विद्यां सरस्वतीं त्रिनयनमहिषीं नमस्यामि मृडानीं शरण्यां शरणमुपागतोऽहं नमो नमस्ते ।

[ वामनपु० अ० ४४ ( गद्यम् ) ]

## (ङ) प्रकीर्णानि स्तोत्राणि

### १. सरस्वतीस्तोत्रम् (मार्कण्डेयकृता सरस्वतीस्तुतिः)

त्वं देवि सर्वलोकानां माता देवारणिः शुभा ।
सदसद् देवि यत्किञ्चिन्मोक्षदाय्यर्थवत्पदम् ॥

तत्सर्वं त्वयि संयोगि योगिवद् देवि संस्थितम् ।
अक्षरं परमं देवि यत्र सर्वं प्रतिष्ठितम् ॥

अक्षरं परमं ब्रह्म विश्वं चैतत् क्षरात्मकम् ।
दारुण्यवस्थितो वह्निर्भूमौ गन्धो यथा ध्रुवम् ॥

तथा त्वयि स्थितं ब्रह्म जगच्चेदमशेषतः ।
ॐकाराक्षरसंस्थानं यत् तद् देवि स्थिरास्थिरम् ॥

तत्र मात्रात्रयं सर्वमस्ति यद् देवि नास्ति च ।
त्रयो लोकास्त्रयो वेदास्त्रैविद्यं पावकत्रयम् ॥

त्रीणि ज्योतींषि वर्गाश्च त्रयो धर्मादयस्तथा ।
त्रयो गुणास्त्रयो वर्णास्त्रयो देवास्तथा क्रमात् ॥

त्रैधातवस्तथाऽवस्थाः पितरश्चैवमादयः ।
एतन्मात्रात्रयं देवि तव रूपं सरस्वति ॥

विभिन्नदर्शनामाद्यां ब्रह्मणो हि सनातनीम् ।
सोमसंस्था हविःसंस्था पाकसंस्था सनातनी ॥

तास्त्वदुच्चारणाद् देवि क्रियन्ते ब्रह्मवादिभिः ।
अनिर्देश्यं पदं त्वेतदर्द्धमात्राश्रितं परम् ॥

अविकार्यक्षयं दिव्यं परिणामविवर्जितम् ।
तवैतत् परमं रूपं यन्न शक्यं मयोदितुम् ॥

न चास्येन न वा जिह्वाताल्वोष्ठादिभिरुच्यते ।
स विष्णुः स वृषो ब्रह्मा चन्द्रार्कज्योतिरेव च ॥

विश्वावासं विश्वरूपं विश्वात्मानमनीश्वरम् ।
साङ्ख्यसिद्धान्तवेदोक्तं बहुशाखास्थिरीकृतम् ॥

अनादिमध्यनिधनं सदसच्च सदेव तु ।
एकं त्वनेकधाप्येकभाववेदसमाश्रितम् ॥

अनाख्यं षड्गुणाख्यं च बह्वाख्यं त्रिगुणाश्रयम् ।
नानाशक्तिविभावज्ञं नानाशक्तिविभावकम् ॥

सुखात् सुखं महत्सौख्यं रूपं तत्त्वगुणात्मकम् ।
एवं देवि त्वया व्याप्तं सकलं निष्कलं च यत् ॥

अद्वैतावस्थितं ब्रह्म यच्च द्वैते व्यवस्थितम् ॥

येऽर्था नित्या ये विनश्यन्ति चान्ये
येऽर्थाः स्थूला ये तथा सन्ति सूक्ष्माः ।

ये वा भूमौ येऽन्तरिक्षेऽन्यतो वा
तेषां देवि त्वत्त एवोपलब्धिः ॥

यद्वा मूर्त्तं यदमूर्त्तं समस्तं
यद्वा भूतेष्वेकमेकं च किञ्चित् ।
यच्च द्वैते व्यस्तभूतं च लक्ष्यं
तत्सम्बद्धे त्वत्स्वरैर्व्यञ्जनैश्च ॥

( वामनपु० स० मा० ११।६-२२।

## २. बलिकृता सुदर्शनचक्रस्तुतिः

नमस्यामि हरेश्चक्रं दैत्यचक्रविदारणम् ।
सहस्रांशुं सहस्राभं सहस्रारं सुनिर्मलम् ॥

नमस्यामि हरेश्चक्रं यस्य नाभ्यां पितामहः ।
तुण्डे त्रिशूलधृक् शर्वं आरामूले महाद्रयः ॥

आरेषु संस्थिता देवाः सेन्द्राः सार्काः सपावकाः ।
जवे यस्य स्थितो वायुरापोऽग्निः पृथिवी नभः ॥

आरप्रान्तेषु जीमूताः सौदामिन्यृक्षतारकाः ।
बाह्यतो मुनयो यस्य बालखिल्यादयस्तथा ॥

तमायुधवरं वन्दे वासुदेवस्य भक्तितः ।
यन्मे पापं शरीरोत्थं वाग्जं मानसमेव च ॥

तन्मे दहस्व दीप्तांशो विष्णोश्चक्र सुदर्शन ।
यन्मे कुलोद्भवं पापं पैतृकं मातृकं तथा ॥

तन्मे हरस्व तरसा नमस्ते अच्युतायुध ।
आधयो मम नश्यन्तु व्याधयो यान्तु संक्षयम् ।
त्वन्नामकीर्तनाच्च दुरितं यातु संक्षयम् ॥

( वामनपु० ६७।११-१७ )

॥ इति वामनपुराणे विविधाः स्तुतयः ॥

● ●

# पौराणिक तथा वैदिक अध्ययन एवं अनुसन्धान-संस्थान, नैमिषारण्य के कतिपय महत्त्वपूर्ण प्रकाशन

१. **मुक्तिवादः**—इस ग्रन्थ में वेदों, उपनिषदों तथा भारतीय दर्शनों में प्रतिपादित 'मुक्ति' के स्वरूप एवं उसको प्राप्ति के उपायों पर शास्त्रीय दृष्टि से गम्भीर विचार किया गया है। इसके रचयिता डॉ० गौरीनाथ शास्त्री जी हैं— १०·००

२. **ब्रह्मपुराण-कथा-कोश**—इस ग्रन्थ में ब्रह्मपुराण में वर्णित कथाओं को हिन्दी-भाषा में अनूदित किया गया है। अनुवाद अत्यन्त रोचक शैली में होने के कारण इसकी लोकप्रियता बढ़ गयी है— १५·००

३. **मत्स्य एवं विष्णुपुराण-कथा-कोश** – इस पुस्तक में 'मत्स्य' एवं 'विष्णु' पुराणों में वर्णित कथाओं को रोचक शैली में हिन्दीभाषा के माध्यम से प्रस्तुत किया गया है। अतः यह पुस्तक अत्यन्त लोकप्रिय हुई है— १६·००

४. **श्रीदुर्गासप्तशती**—श्रीदुर्गासप्तशती पर बहुत व्याख्याएँ एवं अनुवाद प्रकाशित हुए हैं; किन्तु यह संस्करण अन्य संस्करणों से सर्वथा भिन्न है; क्योंकि श्रीदुर्गासप्तशती के गूढ़ एवं रहस्यात्मक पक्षों को हिन्दीभाषा के माध्यम से जिस गवेषणात्मक पद्धति से खोला गया है, वह अन्यत्र दुर्लभ है। अनेक अनुसन्धानपूर्ण परिशिष्टों तथा हिन्दी-अनुवाद के साथ प्रकाशित होने से इस ग्रन्थ की उपयोगिता अत्यधिक बढ़ गयी है—

साधारण संस्करण —२५·००
विशिष्ट संस्करण—४०·००

५. **नैमिषीयम्**—'नैमिषीयम्' पौराणिक तथा वैदिक अध्ययन एवं अनुसन्धान संस्थान की अर्धवार्षिक अनुसन्धान पत्रिका है। इसका प्रकाशन 'वसन्तपञ्चमी' एवं 'श्रावणीपूर्णिमा' को वर्ष में दो बार होता है। इस अनुसन्धान-पत्रिका में पौराणिक तथा वैदिक-साहित्य से सम्बद्ध आनुसन्धानिक निबन्ध संस्कृत, हिन्दी एवं अंग्रेजी भाषाओं में प्रकाशित होते हैं। इसका वार्षिक चन्दा २० रूपया है। ( प्रति अङ्क १०·०० रूपये )।

६. **मार्कण्डेयमहापुराणम्**—इस पुराण का प्रकाशन हिन्दी-व्याख्या एवं विशिष्ट पर्यालोचनात्मक टिप्पणियों के साथ हो रहा है। 'मार्कण्डेय-पुराण' के प्रत्येक अध्याय के अन्त में पर्यालोचनात्मक टिप्पणियाँ लिखी गयी हैं, जिनमें उन-उन अध्यायों के गूढ़तम रहस्यों पर प्रकाश डाला गया है। इसका प्रकाशन तीन भागों में सम्पन्न हुआ है—

| | | |
|---|---|---|
| प्रथम भाग— | साधारण संस्करण | —६५·०० |
| | विशिष्ट संस्करण | —१२५·०० |
| द्वितीय भाग— | साधारण संस्करण | —६५·०० |
| | विशिष्ट संस्करण | —१२५·०० |
| तृतीय भाग— | साधारण संस्करण | —९५·०० |
| | विशिष्ट संस्करण | —१५०·०० |

पत्र-व्यवहार-संकेत—निदेशक, पौराणिक तथा वैदिक अध्ययन एवं अनुसन्धान-संस्थान, नैमिषारण्य, सीतापुर (उ० प्र०)